# तन्त्राख्यायिका

https://sa.wikisource.org/s/dsl

अस्ति कश्चिद् वणिजकः ॥ (१.१)
नगरसमीपे तेन देवतायतनं क्रियते ॥ (२.१)
तत्र ये कर्मकाराः स्थपत्यादयः मध्याह्नवेलायाम् आहारनिमित्तं भोजनमण्डपम् अनुप्रविष्टाः ॥ (३.१)
अकस्माच् चानुषङ्गिकं देवगृहे वानरयूथम् आगतम् ॥ (४.१)
अथ तत्रैकस्य शिल्पिनोऽर्धस्फोटितकाष्ठस्तम्भोऽर्जुनमयः खदिरकीलकेन मध्ये यन्त्रनिखातेनावस्तब्धोऽवतिष्ठते ॥ (५.१)
तत्र कदाचिद् वानरयूथो गिरिशिखराद् अवतीर्य स्वेच्छया तरुशिखरप्रासादशृङ्गदारुनिचयेषु प्रक्रीडितुम् आरब्धः ॥ (६.१)
एकस् तु तत्रासन्नविनाशश् चापलाद् उपविश्य स्तम्भे यन्त्रचारम् उद्दिश्येदम् आह ॥ (७.१)
केनायम् अस्थाने कीलको निखातः ॥ (८.१)
इति पाणिभ्याम् एव संगृह्योत्पाटितुम् आरब्धः ॥ (९.१)
स्थानाच् चलिते कीले यद् वृत्तम् तद् अनाख्येयम् एवम् एव भवता ज्ञातम् इति ॥ (१०.१)
अस्ति कश्चिद् गोमायुर् आहारविच्छेदात् क्षुत्क्षामकण्ठ इतश् च इतः परिभ्रमन्न् उभयसैन्यस्यायोधनभूमिम् अपश्यत् ॥ (११.१)
तत्र च महान्तं शब्दम् अशृणोत् ॥ (१२.१)
तद्भयसंक्षुभितहृदयः किम् इदम् विनष्टोऽस्मि कस्यायं शब्दः क्व वा कीदृशो वैष शब्द इति चिन्तयता दृष्टा गिरिशिखराकारा भेरी ॥ (१३.१)
तां च दृष्ट्वाचिन्तयत् ॥ (१४.१)
किम् अयं शब्दोऽस्याः स्वाभाविकः उत परप्रेरित इति ॥ (१५.१)
अथ सा यदा वायुप्रेरितैर् वृक्षाग्रैः स्पृश्यते तदा शब्दं करोति अन्यदा न इति तूष्णीम् आस्ते ॥ (१६.१)
स तु तस्याः सारासारतां ज्ञातुं संनिकर्षम् उपश्लिष्टः ॥ (१७.१)
स्वयं च कौतुकाद् उभयोर् मुखयोर् अताडयत् अचिन्तयच् च ॥ (१८.१)
गम्यं चैतद् भक्ष्यं च मम ॥ (१९.१)
इत्यवधार्यैकदंष्ट्रया क्षुधाविष्टः पाटितवान् ॥ (२०.१)
परुषत्वाच्च चर्मणः कथमपि न दंष्ट्राभङ्गम् अवाप्तवान् ॥ (२१.१)
प्रतिबद्धश् च पुनर् अप्यचिन्तयत् ॥ (२२.१)
नूनम् अस्या अन्तर् भक्ष्यं भविष्यतीति ॥ (२३.१)
इत्यध्यवस्य भेर्या मुखं विदार्यान्तः प्रविष्टः ॥ (२४.१)
तस्मिन्न् अपि न किंचिद् आसादितवान् ॥ (२५.१)
प्रतिनिवर्तितुम् अशक्तोऽन्तर्लीनार्धकायो विहस्याब्रवीत् ॥ (२६.१)
पूर्वम् एव मया ज्ञातम् इति ॥ (२७.१)
अस्ति कस्मिंश्चित् प्रदेशे परिव्राड् देवशर्मा नाम ॥ (२८.१)
तस्यानेकसाधूपपादितसूक्ष्मवासोविशेषोपचयान् महत्यर्थमात्रा संवृत्ता ॥ (२९.१)
स च न कस्यचिद् अपि विश्वासं याति ॥ (३०.१)
अथ कदाचिद् आषाढभूतिर् नाम परवित्तापहृत् कथम् इयम् अर्थमात्रास्य मया परिहर्तव्येति वितर्क्यावलगनरूपेण उपगम्य तत्कालेन च विश्वासम् अनयत् ॥ (३१.१)
अथ कदाचिद् असौ परिव्राजकस् तीर्थयात्राप्रसङ्गे तेन आषाढभूतिना सह गन्तुम् आरब्धः ॥ (३२.१)
तत्र च कस्मिंश्चिद् वनोद्देशे नदीतीरे मात्रान्तिक आषाढभूतिम् अवस्थाप्यैकान्तम् उदकग्रहणार्थं गतः ॥ (३३.१)
अपश्यच् च महन् मेषयुद्धम् ॥ (३४.१)
अनवरतयुद्धशक्तिसम्पन्नयोश् च तयोः शृङ्गपञ्जरान्तरोद्भूतासृग् बहु भूमौ निपतितं दृष्ट्वा आशाप्रतिबद्धचित्तः पिशितलोभतया गोमायुस् तज्जिघृक्षुः संपीडितोद्घातात् सद्यः पञ्चत्वम् अगमत् ॥ (३५.१)
अथ परिव्राड् विस्मयाविष्टोऽब्रवीत् ॥ (३६.१)
जम्बुको हुडुयुद्धेनेति ॥ (३७.१)
कृतशौचश् चागतस् तम् उद्देशम् आषाढभूतिम् अपि गृहीतार्थमात्रासारम् अपक्रान्तं नापश्यद् देवशर्मा ॥ (३८.१)
केवलं त्वपविद्धत्रिदण्डकाष्ठकुण्डिकापरिस्रावणकूर्चकाद्यपश्यत् अचिन्तयच्च ॥ (३९.१)
क्वासावाषाढभूतिः ॥ (४०.१)
नूनम् अहं तेन मुषितः ॥ (४१.१)
इत्य् उक्तवान् ॥ (४२.१)
वयं चाषाढभूतिनेति ॥ (४३.१)

अथासौ कपालशकलग्रन्थिकावशेषः कंचिद् ग्रामम् अस्तं गच्छति रवौ प्रविष्टः ॥ (४४.१)
प्रविशन्न् एकान्तवासिनं तन्त्रवायम् अपश्यत् आवासकं च प्रार्थितवान् ॥ (४५.१)
तेनापि तस्यात्मीयगृहैकदेशे स्थानं निर्दिश्य भार्या अभिहिता ॥ (४६.१)
यावद् अहं नगरं गत्वा सुहृत्समेतो मधुपानं कृत्वा आगच्छामि तावद् अप्रमत्तया गृहे त्वया भाव्यम् ॥ (४७.१)
इत्यादिश्य गतः ॥ (४८.१)
अथ तस्य भार्या पुंश्चली दूतिकासंचोदिता शरीरसंस्कारं कृत्वा परिचितसकाशं गन्तुम् आरब्धा ॥ (४९.१)
अभिमुखश् चास्या भर्ता मदविलोपासमाप्ताक्षरवचनः परिस्खलितगतिर् अवस्रस्तवासाः समायातः ॥ (५०.१)
तं च दृष्ट्वा प्रत्युत्पन्नमतिः कौशलाद् आकल्पम् अपनीय पूर्वप्रकृतम् एव वेषम् आस्थाय पादशौचशयनाद्यारम्भम् अकरोत् ॥ (५१.१)
कौलिकस् तु गृहं प्रविश्य निद्रावशम् अगमत् ॥ (५२.१)
सुप्तप्रतिबुद्धश् चासौ ताम् आक्रोष्टुम् आरब्धः ॥ (५३.१)
पुंश्चलि त्वद्गतम् अपचारं सुहृदो मे वर्णयन्ति ॥ (५४.१)
भवतु ॥ (५५.१)
पुष्टं निग्रहं करिष्यामीति ॥ (५६.१)
असावपि निर्मर्यादा प्रतिवचनं दातुम् आरब्धा ॥ (५७.१)
पुनर् अपि चासौ प्रतिबुद्धस् तां मध्यस्थूणायां रज्ज्वा सुप्रतिबद्धां कृत्वा प्रसुप्तः ॥ (५८.१)
दूतिकैतां पुनर् गमनाय प्रचोदितवती ॥ (५९.१)
सा तूत्पन्नप्रतिभा दूतिकाम् आत्मीयदर्शनसंविधानेन बद्ध्वा कामुकसकाशं ययौ ॥ (६०.१)
असावपि प्रतिबुद्धस् तथैव ताम् आक्रोष्टुम् आरब्धः ॥ (६१.१)
दूतिका तु शङ्कितहृदयानुचितवाक्योदाहरणभीता न किंचिद् उक्तवती ॥ (६२.१)
तन्त्रवायस् तु शाठ्याद् इयं न किंचिन् ममोत्तरं प्रयच्छति इत्युत्थाय तस्यास् तीक्ष्णशस्त्रेण नासिकां छित्त्वाब्रवीत् ॥ (६३.१)
तिष्ठैवंलक्षणा ॥ (६४.१)
कस् त्वाम् अधुना वार्त्तां पृच्छति ॥ (६५.१)
इत्य् उक्त्वा निद्रावशम् उपागमत् ॥ (६६.१)
आगता च सा तन्त्रवायी दूतिकाम् अपृच्छत् ॥ (६७.१)
का ते वार्त्ता ॥ (६८.१)
किम् अयं प्रतिबुद्धोऽभिहितवान् ॥ (६९.१)
कथय कथयेति ॥ (७०.१)
दूतिका तु कृतनिग्रहा नासिकां दर्शयन्ती सामर्षम् आह ॥ (७१.१)
शिवास् ते सर्वा वार्त्ताः ॥ (७२.१)
मुञ्च ॥ (७३.१)
गच्छामीति ॥ (७४.१)
तथा त्वनुष्ठिते नासिकाम् आदायापक्रान्ता ॥ (७५.१)
तन्त्रवाय्यपि कृतकबद्धम् आत्मानं तथैवाकरोत् ॥ (७६.१)
कौलिकस् तु यथापूर्वम् एव प्रतिबुद्धस् ताम् आक्रोशत् ॥ (७७.१)
असावपि दुष्टा बहु धृष्टरम् आह ॥ (७८.१)
धिग्घतोऽसि ॥ (७९.१)
को मां निरागसं विरूपयितुं समर्थः ॥ (८०.१)
शृण्वन्तु मे लोकपालाः ॥ (८१.१)
यथाहं कौमारं भर्तारं मुक्त्वा नान्यं परपुरुषं मनसापि वेद्मि तथा ममानेन सत्येनाव्यङ्ग्यं मुखम् अस्त्विति ॥ (८२.१)
अथासौ मूर्खः कृतकवचनव्यामोहितचित्तः प्रज्वाल्योल्काम् अव्यङ्गमुखीं जायां दृष्ट्वा प्रोत्फुल्लनयनः परिचुम्ब्य हृष्टमना बन्धवाद् अवमुच्य पीडितं च परिष्वज्य शय्याम् आरोपितवान् ॥ (८३.१)
परिव्राजकस् त्वादित एवारभ्य यथावृत्तम् अर्थम् अभिज्ञातवान् ॥ (८४.१)
दूतिकापि हस्तकृतनासापुटा स्वगृहं गत्वाचिन्तयत् ॥ (८५.१)
किम् अधुना कर्तव्यम् इति ॥ (८६.१)
अथ तस्या भर्ता नापितो राजकुलात् प्रत्यूषस्यागत्य तां भार्याम् आह ॥ (८७.१)
समर्पय भद्रे क्षुरभाण्डम् ॥ (८८.१)
राजकुले कर्म कर्तव्यम् इति ॥ (८९.१)
सा च दुष्टाभ्यन्तरस्थैव क्षुरम् एव प्राहिणोत् ॥ (९०.१)
स च समस्तक्षुरभाण्डासमर्पणात् क्रोधाविष्टचितो नापितस् तम् एव तस्याः क्षुरं प्रतीपं प्राहिणोत् ॥ (९१.१)

अथासावार्तरवम् उच्चैः कृत्वा पाणिना नासापुटं प्रमृज्य असृक्पातसमेतां नासिकां क्षितौ प्रक्षिप्याब्रवीत् ॥ (९२.१)
परित्रायध्वम् परित्रायध्वम् ॥ (९३.१)
अनेनाहम् अदृष्टदोषा विरूपितेति ॥ (९४.१)
तथाभ्यागतै राजपुरुषैः प्रत्यक्षदर्शनां तां दृष्ट्वा विरूपां कीलपार्ष्णिलगुडैर् अतीव हतं पश्चाद् बाहुबन्धश् च तया सह धर्मस्थानम् उपनीतो नापितः ॥ (९५.१)
पृच्छ्यमानश् चाधिकृतैः किम् इदं महद् विशसनं स्वदारेषु त्वया कृतम् इति यदा बहुश उच्यमानो नोत्तरं प्रयच्छति तदा धर्माधिकृताः शूलेऽवतंस्यताम् इत्याज्ञापितवन्तः ॥ (९६.१)
निष्पापं च परिव्राट् शूलस्थानं नीयमानं नापितं दृष्ट्वा सत्त्वानुकम्पया चोपलब्धतत्त्वार्थोऽधिकरणम् उपगम्य धर्मस्थानाधिकृतान् अब्रवीत् ॥ (९७.१)
नार्हथैनम् अदोषकर्तारं नापितं शूले समारोपयितुम् ॥ (९८.१)
यत्कारणम् इदम् आश्चर्यत्रयं श्रूयताम् ॥ (९९.१)
जम्बुको हुडुयुद्धेन वयं चाषाढभूतिना । (१००.१)
दूतिका तन्त्रवायेन त्रयोऽनर्थाः स्वयं कृतः ॥ (१००.२)
समुपलब्धतत्त्वार्थैश् चाधिकृतैः परित्रायितो नापित इति ॥ (१०१.१)
अस्ति कस्मिंश्चित् प्रदेशे वृक्षः तस्मिंश् च वायसौ दम्पती प्रतिवसतः स्म ॥ (१०२.१)
तयोस् तु प्रसवकाले तद्वृक्षविवरानुसार्यसंजातक्रियाण्येवापत्यानि कृष्णसर्पो भक्षयति स्म ॥ (१०३.१)
अथ तेनापकारनिर्वेदनाद् अन्यवृक्षमूलवासिनं प्रियसुहृदं गोमायुम् अपृच्छ्यत यथा ॥ (१०४.१)
भद्र किम् एवंगते प्राप्तकालं भवान् मन्यते ॥ (१०५.१)
बालघातित्वाच् च वृद्धयोर् अभाव एवावयोः ॥ (१०६.१)
गोमायुः ॥ (१०७.१)
भक्षयित्वा बहून् मत्स्यान् उत्तमाधममध्यमान् ॥ (१०८.१)
अतिलौल्याद् बकः पश्चान् मृतः कर्कटविग्रहात् ॥ (१०९.१)
वायसः ॥ (११०.१)
कथं चैतत् ॥ (१११.१)
गोमायुः ॥ (११२.१)
अस्ति कश्चिद् बको वृद्धभावात् सुखोपायां वृत्तिम् आकाङ्क्षमाणः कस्मिंश्चित् सरःप्रदेशेऽधृतिपरीतम् इव आत्मनो रूपं प्रदर्शयन्न् अवस्थितः ॥ (११३.१)
तत्रानेकमत्स्यपरिवृत एकः कुलीरकोऽब्रवीत् ॥ (११४.१)
माम किम् अद्याहारकृत्यं नानुष्ठीयते यथा पुरेति ॥ (११५.१)
बकः ॥ (११६.१)
अहं मत्स्यादः ॥ (११७.१)
तेनोपाधिना विना युष्मान् ब्रवीमि ॥ (११८.१)
मया युष्मान् आसाद्य पूर्वं प्राणरक्षा कृता ॥ (११९.१)
सम्प्राप्तो ममाद्य वृत्तिविच्छेदः ॥ (१२०.१)
अतोऽहं विमनाः ॥ (१२१.१)
कुलीरकः ॥ (१२२.१)
माम केन कारणेन ॥ (१२३.१)
बकः ॥ (१२४.१)
अद्य मत्स्यबन्धैर् एतत्सरःसमीपेनातिक्रामद्भिर् अभिहितम् ॥ (१२५.१)
बहुमत्स्योऽयं ह्रदः ॥ (१२६.१)
अस्मिन्न् जालं प्रक्षिपामः ॥ (१२७.१)
नगरसमीपेऽन्ये ह्रदा अनासादिताः ॥ (१२८.१)
तान् आसाद्य पुनर् आगमिष्याम इति कथयामासुः ॥ (१२९.१)
तत् भद्र विनष्टा नाम यूयम् ॥ (१३०.१)
अहम् अपि वृत्तिच्छेदाद् उत्सन्न एव ॥ (१३१.१)
ततस् तैर् विज्ञप्तः यथा ॥ (१३२.१)
यत एवापायः श्रूयते तत एवोपायोऽपि लभ्यते ॥ (१३३.१)
तद् अर्हस्यस्मान् परित्रातुम् ॥ (१३४.१)
बकः ॥ (१३५.१)

अण्डजोऽहम् असमर्थो मानुषविरोधे ॥ (१३६.१)
किंत्वस्माद्ध्रदाद् अन्यं जलाशयं युष्मान् संक्रामयिष्यामि ॥ (१३७.१)
ततस् तैर् विश्वासम् उपगतैस् तात भ्रातर् मातुल मातुल मां नय मां नय प्रथमतरं नयस्वेत्यभिहितम् ॥ (१३८.१)
असावपि दुष्टमतिः क्रमेण नीत्वा कौशलाद् अजस्रं तान् भक्षयन् परं परितोषम् उपागतः ॥ (१३९.१)
कुलीरकस् तु मृत्युभयोद्विग्नो मुहुर् मुहुस् तं प्रार्थितवान् ॥ (१४०.१)
माम माम् अपि तावद् अर्हसि मृत्युमुखात् परित्रातुम् इति ॥ (१४१.१)
स तु दुष्टात्माचिन्तयत् ॥ (१४२.१)
निर्विण्णोऽस्म्यनेनैकरसेन मत्स्यपिशितेन ॥ (१४३.१)
एनम् अपि तावद् रसविशेषम् आस्वादयिष्यामि ॥ (१४४.१)
ततस् समुत्क्षिप्य वियत् सर्वाम्भःस्थानानि परिहृत्यैकदेशे तप्तशिलायाम् अवतीर्णः ॥ (१४५.१)
कुलीरकोऽपि पूर्वभक्षितमत्स्यशरीरावयवराशिं दृष्ट्वा एवाचिन्तयत् ॥ (१४६.१)
निहता अनेन दुरात्मना प्रज्ञापूर्वकं ते मीनाः ॥ (१४७.१)
तत् किम् अधुना प्राप्तकालम् ॥ (१४८.१)
अथवा ॥ (१४९.१)
अभियुक्तो यदा पश्येन् न कांचिद् गतिम् आत्मनः । (१५०.१)
युध्यमानस् तदा प्राज्ञो म्रियेत रिपुणा सह ॥ (१५०.२)
अनभिज्ञोऽपि बकः कुलीरकसन्दंशग्रहस्य मौर्ख्यात् कुलीरकसकाशाच्छिरश्छेदम् अवाप्तवान् ॥ (१५१.१)
कुलीरकोऽपि गृहीत्वा बकग्रीवाम् उत्पलनालवद् आकाशगमनप्रसाधितचिह्नमार्गो मत्स्यान्तिकम् एव प्रायात् ॥ (१५२.१)
तैश्चाभिहितः ॥ (१५३.१)
भ्रातः क्वासौ माम इति ॥ (१५४.१)
अथासावब्रवीत् ॥ (१५५.१)
पञ्चत्वम् उपगतः ॥ (१५६.१)
तस्यैतद् दुरात्मनः शिरः ॥ (१५७.१)
भक्षितास् तेनोपधिना बहवः स्वयूथ्या वः ॥ (१५८.१)
सोऽपि मत्सकाशाद् विनष्ट इति ॥ (१५९.१)
अतोऽहं ब्रवीमि ॥ (१६०.१)
भक्षयित्वा बहून् मत्स्यान् इति ॥ (१६१.१)
अथ वायसो जम्बुकम् आह ॥ (१६२.१)
आवयोः किं प्राप्तकालं मन्यसे ॥ (१६३.१)
गोमायुः ॥ (१६४.१)
सुवर्णसूत्रम् आदायात्रावासके स्थाप्यताम् ॥ (१६५.१)
असंशयं तत्स्वामी तं कृष्णसर्पं घातयिष्यति ॥ (१६६.१)
इत्य् उक्त्वा स सृगालोऽपक्रान्तः ॥ (१६७.१)
अथ वायसः सुवर्णसूत्रान्वेषी राजगृहं प्रायात् ॥ (१६८.१)
दृष्टं च तेनान्तःपुरैकदेशे धौतवस्त्रयुगलोपरि सुवर्णसूत्रम् उत्तममणिविरचितं महार्हं प्रक्षाल्य चेटिकया स्थापितम् ॥ (१६९.१)
तच् चावस्थाप्यान्यया सह कथां कर्तुम् आरब्धा ॥ (१७०.१)
वायसस् तु तद् गृहीत्वा वियता शनैर् आत्मानं दर्शयन् स्वम् आलयं प्रति प्रायात् ॥ (१७१.१)
अथारक्षिपुरुषैः प्रासमुद्गरतोमरपाणिभिर् महता जवेन गत्वा वृक्षोऽवलोकितः यावत् तेन तत् स्वनीडे स्थापितम् ॥ (१७२.१)
तत्रैकेनारोहता दृष्टम् कृष्णभुजङ्गो वायसपोतान् भक्षयित्वा निद्रावशम् अगमत् ॥ (१७३.१)
तेन चासौ सुप्त एव घातितः ॥ (१७४.१)
तत् कृत्वा सुवर्णसूत्रम् आदाय गत इति ॥ (१७५.१)
अस्ति कस्मिंश्चिद् वनान्तरे महान् सिंहः प्रतिवसति स्म ॥ (१७६.१)
सोऽजस्रं मृगोत्सादं कुरुते ॥ (१७७.१)
अथ ते मृगाः सर्व एवाभिमुखाः प्रणतचित्ता हरिततृणाङ्कुरवक्त्रधारिणोऽवनितलासक्तजानवस् तं मृगराजं विज्ञापयामासुः ॥ (१७८.१)
भो मृगराज किम् अनेन परलोकविरुद्धेन स्वामिनो नृशंसेन निष्कारणं सर्वमृगोत्सादनकर्मणा कृतेन ॥ (१७९.१)
वयं तावद् विनष्टा एव तवाप्याहारस्याभावः ॥ (१८०.१)
तद् उभयोपद्रवः ॥ (१८१.१)
तत् प्रसीद ॥ (१८२.१)
वयं तु स्वामिन एकैकं वनचरं वारेण स्वजातिसमुत्थं प्रेषयामः ॥ (१८३.१)

तथा कृते कालपर्ययाच् छशकस्य वारोऽभ्यागतः ॥ (१८४.१)
स तु सर्वमृगाज्ञापितो रुषितमनाश् चिन्तयामास ॥ (१८५.१)
अन्तकरोऽयं मृत्युमुखप्रवेशः ॥ (१८६.१)
किम् अधुना प्राप्तकालं ममेति ॥ (१८७.१)
अथवा बुद्धिमतां किम् अशक्यम् ॥ (१८८.१)
अहम् एवोपायेन व्यापादयामि सिंहम् ॥ (१८९.१)
इति तस्याहारवेलां क्षपयित्वा गतः ॥ (१९०.१)
असावपि क्षुत्क्षामकण्ठः क्रोधसंरक्तनयनः स्फुरद्वदनदशनसंघर्षदंष्ट्राकरालो लाङ्गूलास्फालनाकारभयकृत् तम् आह ॥ (१९१.१)
सुक्रुद्धैर् अपि किं क्रियतेऽन्यत्र प्राणवियोगात् ॥ (१९२.१)
स त्वम् अद्य गतासुर् एव ॥ (१९३.१)
कोऽयं तव वेलात्ययः ॥ (१९४.१)
शशकः ॥ (१९५.१)
न ममात्मवशस्यातिक्रान्ता स्वामिन् आहारवेला ॥ (१९६.१)
सिंहः ॥ (१९७.१)
केन विधृतोऽसि ॥ (१९८.१)
शशः ॥ (१९९.१)
सिंहेनेति ॥ (२००.१)
तच् छ्रुत्वा परमोद्विग्नहृदयः सिंहोऽब्रवीत् ॥ (२०१.१)
कथम् अन्योऽत्र मद्भुजपरिरक्षिते वने सिंह इति ॥ (२०२.१)
शशो बाढम् इत्याह ॥ (२०३.१)
अथ सिंहो व्यचिन्तयत् ॥ (२०४.१)
किम् अनेन हतेन कारणं मम ॥ (२०५.१)
तं सपत्नं संदर्शयिष्यतीति ॥ (२०६.१)
तं च व्यापाद्यैनं भक्षयिष्यामि ॥ (२०७.१)
इति तम् आह ॥ (२०८.१)
मम तं दुरात्मानं दर्शयस्वेति ॥ (२०९.१)
असावपि शशोऽन्तर्लीनम् अवहस्य बृहस्पत्युशनसोर् नीतिशास्त्रं प्रमाणीकृत्य स्वार्थसिद्धये विमलजलसम्पन्नं द्विपुरुषप्राप्योदकम् इष्टकाचितं महान्तं कूपम् अदर्शयत् ॥ (२१०.१)
असावप्यात्मकायप्रतिबिम्बानभिज्ञतया कुमार्गापन्नचित्तोऽयम् असौ सपत्न इति मत्वा सहसैव तस्य उपरि संनिपतितो मौर्ख्यात् पञ्चत्वम् अगमत् ॥ (२११.१)
अस्ति कस्यचिद् राज्ञः सर्वगुणोपेतम् अनन्यसदृशं शयनम् ॥ (२१२.१)
तस्मिन् प्रच्छदपटैकदेशे मन्दविसर्पिणी नाम यूका प्रतिवसति स्म ॥ (२१३.१)
अथ तस्मिंष् टिण्टिभो नाम मत्कुणो वायुना प्रेरितः संनिपतितः ॥ (२१४.१)
स तु तच् छयनम् अतिसूक्ष्मोत्तरच्छदम् उभयोपधानं जाह्नवीपुलिनविपुलं परममृदु सुरभि च दृष्ट्वा परं परितोषम् उपगतः ॥ (२१५.१)
तत्स्पर्शाकृष्टमना इतश् चेतः परिभ्रमन् कथम् अपि तया मन्दविसर्पिण्या समेतः ॥ (२१६.१)
तयाभिहितः ॥ (२१७.१)
कुतस् त्वम् अस्मिन्न् अयोग्याधिवास आगतः ॥ (२१८.१)
अपगम्यताम् अस्माद् इति ॥ (२१९.१)
मत्कुणः ॥ (२२०.१)
आर्ये मया तावद् इहानेकप्रकाराणि मांसान्यास्वादितानि ब्राह्मणक्षत्रियविट्शूद्रान्तःस्थानि रुधिराणि च ॥ (२२१.१)
तानि तु रूक्षाणि पिच्छिलान्यतुष्टिकराण्यमनोज्ञानि ॥ (२२२.१)
यः पुनर् अस्य शयनस्याधिष्ठाता तस्य मनोरमम् अमृतोपमम् असृग् भविष्यति ॥ (२२३.१)
अजस्रं भिषग्भिः प्रयत्नाद् औषधाद्युपक्रमाद् वातपित्तश्लेष्मनिरोधाद् अनामयतया स्निग्धपेशलद्रवैः सखण्डगुडदाडिमत्रिकटुकपटुभिः स्थलजजलजखेचरबलवत्प्रधानपिशितोपबृंहितैर् आहारैर् उपचितं रुधिरं रसायनम् इव मन्ये ॥ (२२४.१)
तच् च सुरभि पुष्टिकरं चेच्छाम्यहं त्वत्प्रसादाद् आस्वादयितुम् इति ॥ (२२५.१)
अतोऽसौ मन्दविसर्पिण्याह ॥ (२२६.१)
असंभाव्यम् एतत् त्वद्विधानाम् अग्निमुखानां दंशवृत्तीनाम् ॥ (२२७.१)
अपगम्यताम् अस्माच् छयनात् ॥ (२२८.१)
ततोऽसौ तस्याः पादयोर् निपतितः ॥ (२२९.१)

सा तु दाक्षिण्यात् तथा नामेति प्रतिपन्ना ॥ (२३०.१)
किंतु नैवाकाले न चातिमृदुभागे त्वयास्य प्रहर्तव्यम् इति ॥ (२३१.१)
सोऽब्रवीत् ॥ (२३२.१)
कोऽस्य कालः ॥ (२३३.१)
अनभिज्ञोऽहम् अपरिचितत्वात् ॥ (२३४.१)
सा त्वकथयत् ॥ (२३५.१)
मधुपानश्रमागतनिद्रस्य रतिविलासनिर्भरसुप्तस्य च शनैर् मृदुतया भवता विचारणीयम् ॥ (२३६.१)
मदश्रमनिद्रापरीतकायो नाशु प्रबुध्यत इति ॥ (२३७.१)
एवम् अवस्थापिते प्रथमप्रदोष एवाकालज्ञेन दष्टः ॥ (२३८.१)
असावपि पार्थिव उल्मुकदग्ध इव संलीनकुक्षिप्रदेशः ससम्भ्रमम् उत्थायाह ॥ (२३९.१)
अहो दष्टोऽस्मि केनापि ॥ (२४०.१)
अथ मत्कुणश् चकितत्वाद् राजवचनं श्रुत्वा शयनाद् अवतीर्य अन्यद् विवरम् आश्रितः ॥ (२४१.१)
शय्यापालैर् अपि स्वाम्यादेशात् सुनिपुणम् अन्विषद्भिर् वस्त्रं परिवर्तयद्भिर् अन्तर्लीना मन्दविसर्पिणी समासादिता व्यापादिता च ॥ (२४२.१)
अस्ति कस्मिंश्चिन् नगरसमीपे संनिकृष्टविवराभ्यन्तरशायी जम्बुकश् चण्डरवो नाम ॥ (२४३.१)
स कदाचिद् आहारम् अन्वेषमाणः क्षपाम् आसाद्य क्षुत्क्षामगलः संमीलितलोचनः परिभ्रमन् नगरं प्रविष्टः ॥ (२४४.१)
तन्नगरवासिभिश् च सारमेयैस् तीक्ष्णदशनकोटिविलुप्यमानावयवो भयभैरवप्हेत्काररवपूरितदिग्विवर इतस् ततः प्रस्खलन् पलायमानः कस्मिंश्चिद् अज्ञानान् नीलीकलशे संनिपतितः ॥ (२४५.१)
श्वगणश् च यथागतं प्रायात् ॥ (२४६.१)
असावपि कृच्छ्रेणायुःशेषतयास्मान् नीलीकलशात् समुत्तस्थौ ॥ (२४७.१)
अथास्य तच्छरीरं नीलीरसरञ्जितं दृष्ट्वा समीपवर्तिनः क्रोष्टुकगणाः कोऽयम् इति भयतरलदृशः सर्वा दिशः प्रदुद्रुवुः ॥ (२४८.१)
असावप्यचिन्तयत् ॥ (२४९.१)
नूनम् इमां स्वरूपविकृतिं दृष्ट्वैते पलायन्त इति ॥ (२५०.१)
अथ धीरचित्तस् ताञ्शनैर् अवादीत् ॥ (२५१.१)
अलं सम्भ्रमेण ॥ (२५२.१)
अहम् आखण्डलाज्ञया सकलश्वापदकुलपालनक्षमः क्षितितलम् आगत इति ॥ (२५३.१)
अथ तद्वचनम् आकर्ण्य सिंहव्याघ्रचित्रकवानरशशहरिणवृषदंशजम्बुकादयः श्वापदगणास् तं प्रणेमुः ॥ (२५४.१)
प्रतिदिनं च केसरिकरजकुलिशदारितमत्तेभपिशितैर् आपूर्यमाणकुक्षिः कक्षम् इव तं जम्बुकपूगं बहिः कृत्वा सिंहव्याघ्रादीन् आसन्नवर्तिनश् चकार ॥ (२५५.१)
एकदा त्वसौ विविधपिशितनाशितक्षुद् दिक्षु स्थितानां क्रोष्टुकानां क्रोशतां निनादं श्रुत्वा त्वरितततरम् उच्चैर् निननाद ॥ (२५६.१)
अतस् ते सिंहादयस् त्रपया भूभागदृष्टिभाजः कष्टम् अहो वञ्चिताः स्मः क्रोष्टायम् इत्यवधार्य रुषा तं परुषगिरं नाशितवन्त इति ॥ (२५७.१)
अस्ति कस्मिंश्चिद् वनोद्देशे मदोत्कटो नाम सिंहः प्रतिवसति स्म ॥ (२५८.१)
तस्यानुचरास् त्रयः पिशिताशिनो द्वीपिवायसगोमायवः ॥ (२५९.१)
अथ तैर् भ्रमद्भिर् दृष्टः सार्थवाहपरिभ्रष्ट उष्ट्रः ॥ (२६०.१)
तं चाज्ञातपूर्वरूपं हास्यजननं दृष्ट्वा सिंहः पृष्टवान् ॥ (२६१.१)
इदम् अपूर्वं सत्त्वम् इह वने पृच्छ्यताम् ॥ (२६२.१)
कस् त्वम् इति ॥ (२६३.१)
ततोऽवगततत्त्वार्थो वायसोऽब्रवीत् ॥ (२६४.१)
आख्यातनामोष्ट्रोऽयम् इति ॥ (२६५.१)
ततस् तेन सिंहसकाशं विश्वास्यानीतः ॥ (२६६.१)
तेनापि यथावृत्तम् आत्मनो वियोगः सार्थवाहात् समाख्यातः ॥ (२६७.१)
सिंहेन चास्याभ्यवपत्तिर् अभयप्रदानं च दत्तम् ॥ (२६८.१)
एवं च वर्तमाने कदाचित् सिंहो वन्यगजयुद्धरदनक्षतशरीरो गुहावासी संवृत्तः ॥ (२६९.१)
पञ्चषड्दिवसातिक्रान्ते च काले सर्व एव त आहारवैकल्याद् आत्ययिकम् आपतिताः ॥ (२७०.१)
यतोऽवसन्नाः ततस् सिंहेनाभिहिताः ॥ (२७१.१)
अहम् अनया रुजा न क्षमः पूर्ववद् आहारं भवताम् उत्पादयितुम् ॥ (२७२.१)
ते यूयम् आत्मार्थेऽपि तावद् अभ्युद्यमं कुरुत ॥ (२७३.१)
ते तम् आहुः ॥ (२७४.१)
एवं गते किम् अस्माकम् आत्मपुष्ट्यर्थेनेति ॥ (२७५.१)
सिंहः ॥ (२७६.१)

साध्वनुजीविवृत्तं मदुपरि भक्तिश् च भवताम् ॥ (२७७.१)
अतिशोभनम् अभिहितम् ॥ (२७८.१)
शक्ता भवन्तः सरुजश् चाहम् ॥ (२७९.१)
तन् ममैतदवस्थस्योपनयताहारम् इति ॥ (२८०.१)
यदा च न किंचिद् ऊचुः तदा तेनाभिहिताः ॥ (२८१.१)
किम् अनया व्रीडया ॥ (२८२.१)
अन्विष्यतां किंचित् सत्त्वम् ॥ (२८३.१)
अहम् एतदवस्थोऽपि युष्माकम् आत्मनश् चोत्पादयिष्ये प्राणयात्रार्थम् इति ॥ (२८४.१)
एवम् उक्त्वा तेऽप्य् उत्थाय सह क्रथनकेन वनान्तरं प्रविष्टाः ॥ (२८५.१)
व्युदस्य क्रथनकं दुष्टमन्त्रम् आरब्धाः ॥ (२८६.१)
तत्र वायस आह ॥ (२८७.१)
विनाशिता वयम् अनेन स्वामिना स्वाधीनेऽप्यर्थे ॥ (२८८.१)
तावाहतुः ॥ (२८९.१)
कथम् ॥ (२९०.१)
सोऽब्रवीत् ॥ (२९१.१)
नन्वयं क्रथनक इति ॥ (२९२.१)
त आहुः ॥ (२९३.१)
अयम् अस्माकं विश्वासोपगतशरणागतो वयस्यत्वेऽनुज्ञातः ॥ (२९४.१)
स आह ॥ (२९५.१)
शष्पभुजः पिशिताशिनश् च विषमसम्बन्धाः ॥ (२९६.१)
ततस् ताव् ऊचतुः ॥ (२९७.१)
स्वामिनायम् अभयप्रदानेन रक्ष्यते ॥ (२९८.१)
तेन चायुक्तम् अशक्यं चैतद् इति ॥ (२९९.१)
पुनर् अपि वायसोऽब्रवीत् ॥ (३००.१)
तिष्ठत यूयं यावद् अहम् एवैतद् अर्थं संप्रतिपादयिष्यामि ॥ (३०१.१)
इत्य् उक्त्वा सिंहसकाशम् अगमत् ॥ (३०२.१)
सिंहेन चाभिहितम् ॥ (३०३.१)
अन्विष्टं युष्माभिः किंचित् सत्त्वम् इति ॥ (३०४.१)
काकः ॥ (३०५.१)
यस्य चक्षुर् बलं वा स्यात् सोऽन्विष्यतु ॥ (३०६.१)
वयं तु सर्व एवाहारवैकल्याद् अन्धाः परिक्षीणशक्तयश् च ॥ (३०७.१)
किंतु प्राप्तकालम् अवश्यं विज्ञप्यसे ॥ (३०८.१)
स्वामिना विनाशितः स्वात्मनात्मा स्वाधीनेऽप्यर्थे ॥ (३०९.१)
सिंहः ॥ (३१०.१)
कथम् ॥ (३११.१)
काकः ॥ (३१२.१)
नन्वयं क्रथनक इति ॥ (३१३.१)
सिंहः ॥ (३१४.१)
कष्टम् ॥ (३१५.१)
नृशंसम् एतत् ॥ (३१६.१)
मयास्याभ्यवपत्तिर् अभयं च प्रसादीकृतम् ॥ (३१७.१)
अपि च ॥ (३१८.१)
न गोप्रदानं न महीप्रदानं न चान्नदानं हि तथा प्रधानम् ॥ (३१९.१)
यथा वदन्तीह महाप्रधानं सर्वप्रधानेष्वभयप्रदानम् ॥ (३२०.१)
काकः ॥ (३२१.१)
अहो स्वामिनो धर्मशास्त्रं प्रति प्रतिभा ॥ (३२२.१)
एतद् अन्यद् अपि प्रधानं महर्षिवचनम् यथा श्रेयसाम् अर्थे पापीयान् आरम्भः ॥ (३२३.१)
अपि चोक्तम् ॥ (३२४.१)
त्यजेद् एकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ॥ (३२५.१)

ग्रामं जनपदस्यार्थे स्वात्मार्थे पृथिवीं त्यजेत् ॥ (३२६.१)
पुनश् चाह ॥ (३२७.१)
मा स्वामी स्वयं व्यापादयतु ॥ (३२८.१)
मयास्योपधिना वध आरब्धः ॥ (३२९.१)
सिंहः ॥ (३३०.१)
कथम् इव ॥ (३३१.१)
काकः ॥ (३३२.१)
अयं तावद् एतदवस्थं स्वामिनम् अस्मांश् च दृष्ट्वा स्वयम् आत्मानम् अन्यपुष्ट्यर्थं स्वर्गगमनाय सत्त्वहिताय निवेदयति ॥ (३३३.१)
एवम् अभिहितवति वायसे सिंहो मतिभ्रमम् इवार्पितो न किंचिद् अप्युदाहृतवान् ॥ (३३४.१)
असावपि पुनस् तत्सकाशं गत्वा कृतकवचनैः प्रत्येकं विज्ञापितवान् ॥ (३३५.१)
सिंहान्तिकं गतैर् युष्माभिर् एवं वक्तव्यम् इति ॥ (३३६.१)
ततः कृतसंविदः सह क्रथनकेन सिंहसकाशं गताः ॥ (३३७.१)
अथ वायसः प्रणम्य सिंहं विज्ञापितवान् ॥ (३३८.१)
देव स्वामिशरीरं सर्वथा रक्ष्यम् अस्मच्छरीरेणेति ॥ (३३९.१)
अथासावाह ॥ (३४०.१)
अकल्पकायो भवान् ॥ (३४१.१)
न युष्मच्छरीरोपभोगे कृतेऽप्यस्माकं किंचित् तृप्तिकारणं भवति ॥ (३४२.१)
तस्मिंश् चापयाते गोमायुर् अभिहितवान् ॥ (३४३.१)
अस्मान् मम विशिष्टतरं शरीरम् ॥ (३४४.१)
तन् मत्प्राणैः क्रियतां प्राणयात्रेति ॥ (३४५.१)
तम् अपि तथैवाभिहितवान् ॥ (३४६.१)
अपयाते च तस्मिन् द्वीप्याह ॥ (३४७.१)
आभ्यां मम विशिष्टतरं शरीरम् इदम् उपयुज्यताम् इति ॥ (३४८.१)
तम् अप्यसावाह ॥ (३४९.१)
अकल्पकायो भवान् अपीति ॥ (३५०.१)
तच् छ्रुत्वा क्रथनकोऽचिन्तयत् ॥ (३५१.१)
नैवात्र कश्चिद् विनाश्यते ॥ (३५२.१)
तद् अहम् अप्य् एवम् एव ब्रवीमि ॥ (३५३.१)
तत उत्थाय सिंहान्तिकम् उपगम्याब्रवीत् ॥ (३५४.१)
देव एभ्यो मम विशिष्टतरं शरीरम् ॥ (३५५.१)
तस्मान् मच्छरीरेणात्मनः प्राणयात्रा क्रियताम् इति ॥ (३५६.१)
एवम् अभिवदन्न् एव द्वीपिगोमायुभ्यां विदारितोभयकुक्षिः सद्यः पञ्चत्वम् उपगतो भक्षितश् चेति ॥ (३५७.१)
अस्ति समुद्रतीरैकदेशे टीटिभदम्पती प्रतिवसतः स्म ॥ (३५८.१)
अथ कदाचित् प्रसोष्यमाणया टीटिभ्या भर्ताभिहितः ॥ (३५९.१)
किंचित् स्थानम् अन्विष्यताम् यत्राहं प्रसुवे ॥ (३६०.१)
असावकथयत् ॥ (३६१.१)
नन्व् एतद् एव स्थानं वृद्धिकरम् ॥ (३६२.१)
अत्रैव प्रसूष्वेति ॥ (३६३.१)
साब्रवीत् ॥ (३६४.१)
अलम् अनेन सापायेन ॥ (३६५.१)
अवश्यम् एव समुद्रजलवेलाप्लवनान् ममापत्यविनाशो भवति ॥ (३६६.१)
असावाह ॥ (३६७.१)
भद्रे न शक्तो महोदधिर् मया सार्धम् ईदृशं वैरानुबन्धं कर्तुम् इति ॥ (३६८.१)
साब्रवीत् ॥ (३६९.१)
बह्वसदृशं तव समुद्रेण बलम् ॥ (३७०.१)
कथम् आत्मनो ज्ञायते सारासारता ॥ (३७१.१)
उक्तं च ॥ (३७२.१)
दुःखम् आत्मा परिच्छेत्तुम् एवं योग्यो न वेति वा । (३७३.१)
एवंविद् यस्य विज्ञानं सप्फलास् तस्य बुद्धयः ॥ (३७३.२)

अपि च ॥ (३७४.१)
मित्राणां हितकामानां यो वाक्यं नाभिनन्दति । (३७५.१)
स कूर्म इव दुर्बुद्धिः काष्ठाद् भ्रष्टो विनश्यति ॥ (३७५.२)
टीटिभः ॥ (३७६.१)
कथं चैतत् ॥ (३७७.१)
टीटिभी ॥ (३७८.१)
अस्ति कस्मिंश्चित् सरसि कम्बुग्रीवो नाम कच्छपः प्रतिवसति स्म ॥ (३७९.१)
तस्य द्वौ सुहृदौ विकटसंकटनामानौ हंसौ ॥ (३८०.१)
अथ कालविपर्यये द्वादशवार्षिक्यनावृष्टिर् आपतिता ॥ (३८१.१)
ततस् तयोर् मतिर् उत्पन्ना ॥ (३८२.१)
क्षीणतोयम् इदं सरः ॥ (३८३.१)
अन्यं जलाशयं गच्छावेति ॥ (३८४.१)
किं पुनश् चिरोषितं प्रियमित्रं कम्बुग्रीवम् आमन्त्रयावहे ॥ (३८५.१)
तथा चानुष्ठिते कच्छपेनाभिहितौ ॥ (३८६.१)
कस्मान् ममामन्त्रणं क्रियते ॥ (३८७.१)
यदि तु स्नेहोऽस्ति ततो माम् अप्यस्मान् मृत्युमुखात् त्रातुम् अर्हथः ॥ (३८८.१)
यत्कारणम् युवयोस् तावद् आहारवैकल्यं केवलम् अस्मिन् स्वल्पोदके सरसि ममात्र तु मरणम् एव ॥ (३८९.१)
तद् विचिन्त्यताम् आहारसुहृद्वियोगयोः को गरीयान् ॥ (३९०.१)
ताभ्याम् अभिहितम् ॥ (३९१.१)
युक्तम् आत्थ ॥ (३९२.१)
एवम् एतत् ॥ (३९३.१)
किं पुनः प्राप्तकालं भवात्र् जानाति ॥ (३९४.१)
अवश्यं नयावावां भवन्तम् ॥ (३९५.१)
त्वया पुनश् चापलान् न किंचिद् वक्तव्यम् ॥ (३९६.१)
इमां तु यष्टिं मध्ये दशनैर् आपीडय ॥ (३९७.१)
एवम् अनयैवोद्धृत्य षष्टिमात्राणि योजनानि महत् सरो भवन्तं नयावः ॥ (३९८.१)
तत्र सुखं यापयिष्याम इति ॥ (३९९.१)
एवं च निष्पन्ने तज्जलाशयसंनिकृष्टनगरस्योपरिष्टान् नीयमानं दृष्ट्वा किम् इदं शकटचक्रप्रमाणं वियता नीयत इति जनः सकलकलः संवृत्तः ॥ (४००.१)
तच् च श्रुत्वासन्नविनाशः कच्छपो यष्टिं त्यक्त्वाभिहितवान् ॥ (४०१.१)
अहं कच्छपः ॥ (४०२.१)
चापलाद् एष लोकः प्रलपति इति ब्रुवन् वचनसमकालम् एवाश्रयात् परिभ्रष्टो भूमौ निपतितः मांसार्थिना च लोकेन पातसमकालम् एव तीक्ष्णशस्त्रैः खण्डशो विभक्त इति ॥ (४०३.१)
अस्ति कस्मिंश्चिन् महाह्रदे महाकायास् त्रयो मत्स्याः प्रतिवसन्ति स्म तद् यथा ॥ (४०४.१)
अनागतविधाता प्रत्युत्पन्नमतिर् यद्भविष्यश् चेति ॥ (४०५.१)
तत्रानागतविधात्रा तदुदकान्तर्गतेन कदाचित् तत्समीपे मत्स्यबन्धानाम् अतिक्रामतां वचनं श्रुतम् ॥ (४०६.१)
बहुमत्स्योऽयं ह्रदः ॥ (४०७.१)
अत्र मत्स्यबन्धं कुर्मः ॥ (४०८.१)
तच् च श्रुत्वानागतविधात्रा चिन्तितम् ॥ (४०९.१)
अवश्यम् एत आगन्तारः ॥ (४१०.१)
तद् अहं प्रत्युत्पन्नमतिं यद्भविष्यं च गृहीत्वान्यम् अछिन्नस्रोतस्कं ह्रदं संश्रयामीति ॥ (४११.१)
ततस् तावाहूय पृष्टवान् गमनाय ॥ (४१२.१)
तत्र प्रत्युत्पन्नमतिर् मतिनिवारितोऽभयचित्तः कथमपि प्रमादान् नानुयातः ॥ (४१३.१)
यद्भविष्यस् त्वासन्नविनाशस् तद्वचनम् अनादृत्य निरारम्भ एव आसीत् ॥ (४१४.१)
अन्येद्युश् चापयातेऽनागतविधातरि मत्स्यबन्धैर् अन्तःस्रोतो निरुध्य प्रक्षिप्तं संवर्तजालम् ॥ (४१५.१)
अपकृष्टे च जाले तस्मिन् ह्रदे नाप्य् एकतरोऽवशिष्टः ॥ (४१६.१)
एवं गते प्रत्युत्पन्नमतिर् मृतरूपं कृत्वात्मानं जलस्य उपरि दर्शितवान् ॥ (४१७.१)
तैर् अपि स्वयम् एव मृतो महामत्स्य इति कृत्वा परिस्रोतसि स्थापितः ॥ (४१८.१)
तस्माद् उत्प्लुत्यान्यं जलाशयं गतः ॥ (४१९.१)

यद्भविष्यस् त्वनेकलगुडप्रहारजर्जरितशरीरः पञ्चत्वम् उपनीत इति ॥ (४२०.१)
अतोऽहं ब्रवीमि ॥ (४२१.१)
अनागतविधाता चेति ॥ (४२२.१)
अथ कदाचित् प्रसूतायां टीटिभ्यां तद्भर्तृजिज्ञासया समुद्रेण अपहृतास् तेऽण्डकाः पश्यामि तावत् अयं किम् आरम्भत इति ॥ (४२३.१)
अथ टीटिभी शून्यम् अपत्यस्थानं दृष्ट्वा परमाविग्नहृदया भर्तारम् आह ॥ (४२४.१)
इदं तद् आपतितं मन्दभाग्यायाः ॥ (४२५.१)
असावन्तर्लीनम् अवहस्य ताम् आह ॥ (४२६.१)
ममापि तावत् भद्रे दृश्यतां सामर्थ्यम् इति ॥ (४२७.१)
ततस् तेन पक्षिसमाजं कृत्वा निवेदितं तदपत्यहरणजं दुःखम् ॥ (४२८.१)
तत्रैकेनाभिहितम् ॥ (४२९.१)
असमर्था वयं महोदधिविग्रहाय ॥ (४३०.१)
किं पुनर् अत्र प्राप्तकालम् ॥ (४३१.१)
सर्व एव वयम् आक्रन्देन गरुत्मन्तम् उद्वेजयामः ॥ (४३२.१)
सैव नो दुःखम् अपनेष्यति ॥ (४३३.१)
इत्यवधार्य तत्सकाशं गताः ॥ (४३४.१)
असावपि देवासुररणनिमित्तम् आहूतो विष्णुना गरुडस् तत् स्वयूथ्यव्यसनं दृष्ट्वा मन्युम् आजगाम ॥ (४३५.१)
देवोऽपि विष्णुस् त्रैकाल्यदर्शनसामक्ष्यात् तस्यान्तर्गतं मत्वा स्वयम् एव तत्सकाशम् अगमत् ॥ (४३६.१)
अथ देवं दृष्ट्वा सुतराम् आविग्नहृदयोऽब्रवीत् ॥ (४३७.१)
युक्तं त्वया नाथेन सता समुद्रापसदान् ममायं परिभव इति ॥ (४३८.१)
ज्ञात्वा च देवः परिहस्य समुद्रस्येदम् उवाच ॥ (४३९.१)
समर्पयाधुनापत्यानि टीटिभस्येति ॥ (४४०.१)
अन्यथा त्वाम् आग्नेयास्त्रप्रतापितम् अनेकवडवामुखसहस्रपरिक्षीणतोयं सद्यः करिष्यामीति ॥ (४४१.१)
एवम् उक्तो महोदधिश् चिन्तयामास ॥ (४४२.१)
ममाण्डजेन सर्वनाश एव प्रारब्धः ॥ (४४३.१)
इति मत्वा प्रणम्य देवं समर्पितवान् इति ॥ (४४४.१)
अस्ति कस्मिंश्चिद् वनोद्देशे वृकजम्बुककरभसहितो वज्रदन्तो नाम सिंहः प्रतिवसति स्म ॥ (४४५.१)
कदाचिद् असौ वन्यद्विपरदनकोटिपाटितवक्षा एकदेशस्थः क्षुत्क्षामतनुः क्षुधा परिगतान् तान् सचिवान् आह ॥ (४४६.१)
किंचिद् अन्विष्यतां वने सत्त्वजातम् येनाहम् एतदवस्थोऽपि भवतां वृत्तिम् आपादयिष्यामि ॥ (४४७.१)
अथ तदाज्ञासमकालम् एव तेऽरण्ये पर्यटन्तो यदा न किंचिद् आसेदुः तदासौ जम्बुकस् तं शङ्कुकर्णनामानं करभं विविक्तेऽभिहितवान् ॥ (४४८.१)
किम् अत्र प्राप्तकालं मन्यते भवान् ॥ (४४९.१)
स्वामी वज्रदन्तोऽस्मदीयपर्यटनम् अनर्थकं श्रुत्वा कदाचिद् विनाशाय प्रवर्तते ॥ (४५०.१)
तद् अहं किंचिद् भवतः प्रार्थये यदि प्रतीच्छसीति ॥ (४५१.१)
स आह ॥ (४५२.१)
किं ममास्ति वयस्य यत् प्रार्थ्यते ॥ (४५३.१)
शरीरम् अपि मे त्वदायत्तम् ॥ (४५४.१)
यथाभिमतम् उपयुज्यताम् इति ॥ (४५५.१)
अथ जम्बुकोऽब्रवीत् ॥ (४५६.१)
एतद् एवात्र कारणम् ॥ (४५७.१)
अहं ते द्विगुणं शरीरं सिंहसकाशाद् दापयिष्ये ॥ (४५८.१)
त्वयाप्य् एवं वयम् आत्मा च संवर्धिताः स्युर् इति ॥ (४५९.१)
प्रतिपन्नश् चासौ ॥ (४६०.१)
एवम् अभिधाय सिंहसकाशं गत्वा तम् आह ॥ (४६१.१)
स्वामिन् न किंचित् सत्त्वम् आसादितम् ॥ (४६२.१)
एष पुनः शङ्कुकर्णोऽभिधत्ते ॥ (४६३.१)
बृहत्प्रस्थेन द्विगुणया तुलयोज्जास्यं शरीरं सम्प्रयच्छामि इति ॥ (४६४.१)
तच् छ्रुत्वा सिंहः प्रहृष्ट आह ॥ (४६५.१)
एवं क्रियताम् ॥ (४६६.१)
अथ प्रतिपन्ने शङ्कुकर्णः पपात भूमौ खण्डशश् च कृतः ॥ (४६७.१)
ततश् चतुरकस् तं सिंहं रुधिररक्तसर्वगात्रं दृष्ट्वा अब्रवीत् ॥ (४६८.१)

गच्छतु स्वामी स्नानम् आचरितुम् यावद् अहं क्रव्यमुखसहितस्तिष्ठामि ॥ (४६९.१)
गते च तस्मिंश् चतुरकस् तं क्रव्यमुखम् आह ॥ (४७०.१)
भक्षय तावद् अतः पिशितम् यावद् असौ स्नातुं गतः ॥ (४७१.१)
सोऽब्रवीत् ॥ (४७२.१)
भक्षयित्वा किम् उत्तरं दास्यामि ॥ (४७३.१)
जम्बुकोऽब्रवीत् ॥ (४७४.१)
किं तवानेन विचारेण ॥ (४७५.१)
अहम् एतस्य प्रतिवचनं दास्यामि ॥ (४७६.१)
त्वया पुनर् मम मुखम् एवावलोकितव्यम् इति ॥ (४७७.१)
एवम् उक्ते ताभ्यां क्रव्यम् अतिबहु भक्षितम् ॥ (४७८.१)
अत्रान्तरे सिंहः सम्प्राप्तो यावत् पश्यति सकलं जठरपिशितम् उपभुक्तम् ततश् चतुरकम् आह ॥ (४७९.१)
माम क्व तज् जठरपिशितम् ॥ (४८०.१)
एवं वदति सिंहे क्रव्यमुखो मुखं चतुरकस्यावलोकितवान् ॥ (४८१.१)
चतुरकोऽब्रवीत् ॥ (४८२.१)
किम् अधुना मन्मुखम् अवलोकयसि ॥ (४८३.१)
स्वामिन् ॥ (४८४.१)
भक्षितम् अनेनेति ॥ (४८५.१)
अथ सिंहः कुलिशखरनकरो भ्रूकुटिलमुखः प्रकटितरोषस्तं हन्तुम् ऐच्छत् ॥ (४८६.१)
अथासावपि वृको मुखवैवर्ण्यवेपथुव्याप्ततनुर् अतनुपदविक्षेपः क्षिप्रपलायनपटुर् अटवीम् उद्दिश्य जगाम ॥ (४८७.१)
सिंहोऽपि किंचिद् अनुसृत्य प्रतिनिवृत्तः ॥ (४८८.१)
एतस्मिंश् चान्तरे कथमपि च तत्समीपम् अथ कश्चित् सार्थवाहोऽनेन पथायातः ॥ (४८९.१)
तस्य च सार्थाग्रेसरं कटाहेन गलबद्धेन करभम् आगच्छन्तं दृष्ट्वा कृतकविषादो जम्बुकस् तं सिंहम् आह ॥ (४९०.१)
देव विनष्टावावाम् ॥ (४९१.१)
मा खलु कश्चिद् वनं धारयतु ॥ (४९२.१)
यावद् अद्यापि पिशितं नोपभुज्यते तावद् बृहत्प्रस्थम् आदाय धनिकाचारेणायं करभकः सम्प्राप्तः ॥ (४९३.१)
तत् किम् अत्र प्राप्तकालम् ॥ (४९४.१)
गच्छतु स्वामी दिगन्तरम् अन्यत् यावद् अहम् एनं लब्धचित्ताभिप्रायं करोमीति ॥ (४९५.१)
एवम् अभिहिते सिंहस् तस्माद् अपयातः ॥ (४९६.१)
चतुरकोऽपि बहुदिनानि तत् पिशितम् उपभुक्तवान् ॥ (४९७.१)
अस्ति कस्मिंश्चिद् वनोद्देशे महान् वानरयूथः ॥ (४९८.१)
स कदाचिद्धेमन्तकालेऽसुखासीनोऽतिविह्वलतया खद्योतं दृष्ट्वाग्निर् अयम् इत्याहार्यैः शुष्कतृणपर्णैर् आच्छाद्य प्रसारितभुजः कक्षकुक्षिवक्षःप्रदेशान् कण्डूयमानः प्रतापमनोरथसुखानि किलानुभवति ॥ (४९९.१)
तत्रैकः शाखामृगस् तद्गतमना मुहुर्मुहुस् तम् एव मुखेनोपाधमत् ॥ (५००.१)
अथ सूचीमुखो नाम ॥ (५०१.१)
तेन वृक्षाद् अवतीर्याभिहितः ॥ (५०२.१)
मा क्लिशः ॥ (५०३.१)
नायं वह्निः खद्योतोऽयम् इति ॥ (५०४.१)
अथासावधमत् तस्य तद् वचनम् अवमन्यैव ॥ (५०५.१)
पुनश् च तेनासकृद् वार्यमाणो नैव शाम्यति ॥ (५०६.१)
किं बहुना तावत् तेन कर्णाभ्याशम् आगत्यागत्य प्रबलम् उद्वेजितः यावत् तेन सहसा गृहीत्वा शिलायाम् आविध्य विगतप्राणः कृतोऽसाविति ॥ (५०७.१)
अस्ति कस्मिंश्चिद् अधिष्ठाने वणिक्सुतौ सुहृदौ स्तः ॥ (५०८.१)
एको दुष्टबुद्धिर् अपरो धर्मबुद्धिः ॥ (५०९.१)
तावर्थोपार्जननिमित्तं विशिष्टं देशान्तरं गतौ ॥ (५१०.१)
अथ तत्र धर्मबुद्धिर् नामैकः सार्थवाहसुतो यस् तेन कस्यचित् साधोः पूर्वस्थापितं कलशिकागतं स्वभाग्यप्रचोदितं रौप्यदीनारसहस्रं प्राप्तम् ॥ (५११.१)
स दुष्टबुद्धिना सह सम्प्रधार्य कृतार्थावावां स्वदेशं गच्छाव इति प्रत्यागतौ ॥ (५१२.१)
अधिष्ठानसमीपे धर्मबुद्धिनाभिहितम् ॥ (५१३.१)
दीनारा अर्धविभागेन विभज्यन्ताम् ॥ (५१४.१)

स्वगृहान् प्रविशावः ॥ (५१५.१)
अधुना सुःत्स्र्वजनादिसमक्षम् उज्ज्वलं वत्स्यावः ॥ (५१६.१)
अथ दुष्टबुद्धिर् अन्तःकठिनहृदयः स्वार्थसिद्धये तम् आह ॥ (५१७.१)
भद्र वित्तशेषो यावद् आवयोः सामान्यः तावद् अविच्छिन्नः स्नेहसद्भावः ॥ (५१८.१)
किंत्व् एकम् एकं शतं गृहीत्वा प्रविशावः ॥ (५१९.१)
यत्कारणम् पुण्यपरीक्षा ह्रासवृद्धिभ्यां भविष्यत्य् एकार्थता च जनस्पृहणीया ॥ (५२०.१)
तथा चानुष्ठिते शेषं कुत्रचित् सुगुप्तं कृत्वा प्रविष्टौ ॥ (५२१.१)
अथ तद्वर्षाभ्यन्तरे दुष्टबुद्धिर् असद्व्ययव्यसनित्वाद् भाग्यच्छिद्रतया च क्षीणप्रत्यंशः पुनर् अपि च निधितो धर्मबुद्धिना सहापरशतं विभक्तवान् ॥ (५२२.१)
तद् अपि द्वितीयवर्षाभ्यन्तरे तथैव क्षीणम् ॥ (५२३.१)
एवं गते दुष्टबुद्धिश् चिन्तयामास ॥ (५२४.१)
यदि पुनः शतविभागेन विभजावः तत् किं मया कृतं भवति ॥ (५२५.१)
शेषैः षड्भिर् अपहृतैः समस्तान्य् एवासादयामि ॥ (५२६.१)
एवं मत्वैकाकी भूत्वा ताम् अर्थमात्राम् अपनीय प्रदेशं समीकृत्य मासातिक्रान्ते काले धर्मबुद्धिम् अभिहितवान् ॥ (५२७.१)
भद्र समविभागं शेषवित्तस्य कुर्व इति ॥ (५२८.१)
प्रतिपन्ने च धर्मबुद्धिना सह गत्वा तम् एवोद्देशं खातकर्म कर्तुम् आरब्धः ॥ (५२९.१)
खन्यमाने च यदा न दृश्यते तदा प्रथमतरं धृष्टतया दुष्टबुद्धिः पाषाणेनात्मनः शिरोऽताडयद् अब्रवीच् च ससम्भ्रमम् ॥ (५३०.१)
क्व तद् ब्रह्महृदयम् धर्मबुद्धे ॥ (५३१.१)
नूनं त्वयापहृतम् इति ॥ (५३२.१)
एवं परस्परशङ्कया विवदमानौ धर्मस्थानम् उपागतौ ॥ (५३३.१)
आवेदिते च तस्मिन्न् अर्थेऽवगतेऽव्यक्तव्यवहारदुश्छेदतया संनिरुद्धौ ॥ (५३४.१)
पञ्चरात्राभ्यन्तराच् च दुष्टबुद्धिनाधिकृतानां प्रतिज्ञातम् ॥ (५३५.१)
साक्षिणो मम सन्त्यत्रव्यवहारदीनाराणाम् इति ॥ (५३६.१)
तैस् तु व्यवहारनिवर्तनार्थं पृष्टः ॥ (५३७.१)
कस् ते साक्षी ॥ (५३८.१)
दर्शयस्वेति ॥ (५३९.१)
सोऽब्रवीत् ॥ (५४०.१)
यस्यैव वृक्षस्याधस्तात् स्थापितं द्रव्यम् तेनैव विभावयामि इति ॥ (५४१.१)
अथ ते विस्मयम् उपगताः कथं वनस्पतिर् मन्त्रयिष्यतीति ॥ (५४२.१)
कृतप्रतिभुवौ स्वगृहं विसर्जितौ ॥ (५४३.१)
अथ दुष्टबुद्धिना स्वगृहं गतेन पिताभिहितः ॥ (५४४.१)
तात मद्धस्तगतास् ते पणाः ॥ (५४५.१)
किंतु वाङ्मात्रावबद्धास् तिष्ठन्ति ॥ (५४६.१)
अहं तु त्वाम् अद्य रात्रौ वृक्षविवरेऽस्मिन् स्थापयामि ॥ (५४७.१)
प्रभाते धर्माधिकृतसमक्षं पृष्टस् तं विभावयेति ॥ (५४८.१)
ततस् तेनाभिहितम् ॥ (५४९.१)
पुत्र विनष्टावावाम् ॥ (५५०.१)
किं कारणम् अनुपाय एषः ॥ (५५१.१)
तथा च ॥ (५५२.१)
उपायं चिन्तयेत् प्राज्ञो ह्यपायम् अपि चिन्तयेत् । (५५३.१)
पश्यतो बकमूर्खस्य नकुलैर् भक्षिताः सुताः ॥ (५५३.२)
सोऽब्रवीत् ॥ (५५४.१)
कथम् एतत् ॥ (५५५.१)
असावाह ॥ (५५६.१)
अस्ति कस्मिंश्चिद् अर्जुनवृक्षे बकदम्पती प्रतिवसतः स्म ॥ (५५७.१)
तत्र च वृक्षविवरानुसारी महाकायोऽहिर् असंजातक्रियाण्य् एव अपत्यानि भक्षयति स्म ॥ (५५८.१)
तेन च निर्वेदेन नष्टसंज्ञावाहारक्रियाम् उत्सृज्य जलाशयैकदेशे विमनस्कावासाते ॥ (५५९.१)
अथ तत्रैकः कुलीरकस् तम् आह ॥ (५६०.१)
माम किम् अद्याप्याहारोऽनुष्ठीयत इति ॥ (५६१.१)

बकः ॥ (५६२.१)
अधृतिपरीतस्य मे कुत आहाराभिलाष इति ॥ (५६३.१)
यतोऽसावाह ॥ (५६४.१)
किंलक्षणसमुत्थाधृतिः ॥ (५६५.१)
स तु तस्मै यथावृत्तम् अपत्यभक्षणम् आख्यातवान् ॥ (५६६.१)
कुलीरकस् तु तं समर्थितवान् ॥ (५६७.१)
अहम् उपायं तद्वधाय कथयामि ॥ (५६८.१)
येयं नकुलवसतिर् एतत्प्रभृत्यविच्छिन्नपरम्परया मत्स्यपिशितं प्रकीर्यताम् यावत्सर्पवसतिः ॥ (५६९.१)
ततस् त एवैनं घातयिष्यन्ति ॥ (५७०.१)
तथा चानुष्ठिते नकुलैः पिशितमार्गानुसारिभिः पूर्ववैरक्रियाम् अनुस्मरद्भिः खण्डशोऽहिं कुर्वद्भिः पूर्वदृष्टमार्गम् आधावद्भिर् बकावासं गत्वा बकस्य शेषापत्यभक्षणं कृतम् इति ॥ (५७१.१)
अतोऽहं ब्रवीमि ॥ (५७२.१)
उपायं चिन्तयेत् प्राज्ञो ह्यपायम् अपि चिन्तयेत् ॥ (५७३.१)
इति ब्रुवन्न् अपि तेनासौ नीत्वा स्थापितो वृक्षविवरे ॥ (५७४.१)
अथ प्रभातसमयेऽधिकरणप्रकृतिप्रत्यक्षं धर्मशास्त्रवचनाभिश्रावितेन वनस्पतिना यथाप्रस्तुतम् अभिहितम् ॥ (५७५.१)
धर्मबुद्धिनार्थोऽपहृत इति ॥ (५७६.१)
तच् च श्रुत्वा धर्मबुद्धिश् चिन्तयामास ॥ (५७७.१)
कथम् अवाक् पादपो वाचं व्याहरिष्यति ॥ (५७८.१)
तत् कारणेनात्र भवितव्यम् ॥ (५७९.१)
सर्वथा बुद्धिसाध्यम् एतत् ॥ (५८०.१)
अथ धर्मस्थानीयान् आह ॥ (५८१.१)
अहो विस्मयः ॥ (५८२.१)
अद्याप्यविप्लुत एव लोके धर्मबुद्धिर् अहं विजनेऽस्मिन् वन एकाक्यागम्य तद् द्रव्यं गृहीतवान् ॥ (५८३.१)
अथापश्यम् अहिम् अतिकायम् आयान्तम् ॥ (५८४.१)
चिन्तितं च मया ॥ (५८५.१)
कष्टम् इदम् आपतितम् ॥ (५८६.१)
अभिहितं च ॥ (५८७.१)
पुनर् अपि विषया लभ्यन्ते न तु प्राणाः ॥ (५८८.१)
पुनर् आगमिष्यामि ॥ (५८९.१)
इत्यत्रैव वृक्षमूलेऽवस्थापितम् ॥ (५९०.१)
अधुनावश्यं राजवशात् समर्पितव्यम् ॥ (५९१.१)
किंत्वस्मात् स्थानाद् एकान्तेऽवस्थानं कुरुध्वम् यावद् अहम् एनं निधिपालं कृष्णसर्पं पराजयामि ॥ (५९२.१)
इत्य् उक्त्वाहार्यैः शुष्कदारुपर्णनिचयैर् वृक्षविवरम् आपूर्याग्निम् आदीपयितुम् आरब्धः ॥ (५९३.१)
दुष्टबुद्धिस् त्वधोमुखेनाक्ष्णा विलोक्य वृक्षविवरान्तर्गतं वणिक्पुत्रं दृष्ट्वा व्यथितमना अभवत् ॥ (५९४.१)
प्रदीप्ते च वह्नौ समन्तत उज्ज्वलीभूताद् वृक्षविवरात् स्फुटिततनुः प्लुष्टकेशः स्रस्तत्वग् यदा जातो वणिक् तदा भूमौ निपतितः ॥ (५९५.१)
तत् तु महद् वैकारिकं दृष्ट्वा किम् इदम् इति परं विस्मयम् उपगताः ॥ (५९६.१)
किंचिज्जीवितं च प्रत्यक्षम् अभिज्ञाय वणिक्पुत्रं पप्रच्छुः ॥ (५९७.१)
किम् इदम् ईदृशम् अग्निपतनम् अध्यवसितं भवतेति ॥ (५९८.१)
ततोऽसावब्रवीत् ॥ (५९९.१)
अनेन दुष्पुत्रेणाहम् अवस्थाम् इमां प्रापित इति ॥ (६००.१)
एवम् अभिवदन् पञ्चत्वम् उपगतः ॥ (६०१.१)
अनन्तरं धर्माधिकृतास् तम् अर्थं ज्ञात्वाभिहितवन्तः ॥ (६०२.१)
दुष्टबुद्धिर् अयं पापः शूलेऽवतंस्यताम् इति ॥ (६०३.१)
अस्ति कस्मिंश्चिद् अधिष्ठाने क्षीणबान्धवो वणिक्सुतः ॥ (६०४.१)
स देशान्तरम् अर्थोपार्जननिमित्तं प्रस्थितः ॥ (६०५.१)
तस्य तुला लोहसहस्रकृता विद्यते ॥ (६०६.१)
सोऽन्यस्मिन् वणिक्पुत्रके तां निक्षिप्य देशान्तरम् अर्थोपार्जनाय प्रायात् ॥ (६०७.१)
क्षीणभाग्यत्वाच् च तेन बहुनापि कालेन न किंचिद् आसादितम् ॥ (६०८.१)
प्रत्यागतश् च तां तुलां तस्मात् प्रार्थितवान् ॥ (६०९.१)

तेनोक्तं च ॥ (६१०.१)
सा मूषकैर् भक्षितेति ॥ (६११.१)
अथासावचिन्तयत् ॥ (६१२.१)
विस्मयनीयम् एतत् ॥ (६१३.१)
कथं लोहसहस्रमयीं तुलां मूषका भक्षयिष्यन्तीति ॥ (६१४.१)
अन्तर्लीनम् अवहस्याब्रवीत् अवश्यम् एतद् एवम् यत्कारणम् ॥ (६१५.१)
वृष्यं स्वादु मृदु च लोहं कथम् आखवो न भक्षयिष्यन्ति इति प्रतिपन्नवाक् ॥ (६१६.१)
असावपि सुपरिहृष्टहृदयः पाद्यादिपुरःसरां तस्य पूजां कर्तुम् आरब्धवान् भोजने च प्रार्थितवान् ॥ (६१७.१)
तस्य च नातिदूरे नदी ॥ (६१८.१)
तत्र स्नानाभ्युद्यतस्य च तस्य स्वीयं पुत्रम् एकम् आमलकस्नानशाटिकासमेतं पृष्ठतः प्रेषितवान् ॥ (६१९.१)
असावपि प्रत्यागच्छन् दारकम् अन्यस्मिन् मित्रगृहे सुगुप्तं कृत्वा प्रविष्टः ॥ (६२०.१)
अथ भोजनसमये सार्थवाहो दारकम् अदृष्ट्वा समाकुलमनाः शङ्कितहृदयश् च तम् अपृच्छत् ॥ (६२१.१)
क्वासौ दारकस् तवानुपदप्रेषितः ॥ (६२२.१)
इह न प्रविष्ट इति ॥ (६२३.१)
अथ सोऽब्रवीत् ॥ (६२४.१)
श्येनेनापहृतः ॥ (६२५.१)
तच् छ्रुत्वा परमाविग्नो निर्दयीभूतश् च तं बाहौ गृहीत्वा धर्मस्थानं नीतवान् आह च ॥ (६२६.१)
परित्रायध्वम् ॥ (६२७.१)
अनेन मे दारकः क्वापि गोपित इति ॥ (६२८.१)
पृष्टश् चासौ प्राड्विवाकैः ॥ (६२९.१)
किम् एतत् ॥ (६३०.१)
कथ्यताम् इति ॥ (६३१.१)
स विहस्याब्रवीत् ॥ (६३२.१)
श्येनेनापहृत इति ॥ (६३३.१)
ततस् तैर् विस्मितमनोभिर् अभिहितः ॥ (६३४.१)
कथं श्येनो दारकम् अपहरिष्यतीति ॥ (६३५.१)
धर्माधिकृतैस् तथ्यं पृच्छ्यमानोऽब्रवीत् ॥ (६३६.१)
किम् अत्र चित्रम् ॥ (६३७.१)
यत्र तुला लोहसहस्रस्यास्य गेहे मदीया मूषकैर् भक्षिता तत्र कथं दारकः श्येनेन नापह्रियत इति ॥ (६३८.१)
तच्च श्रुत्वा प्रतिपादितवन्तस् ते प्राड्विवाकाः परस्परस्य तत्तुलातद्दारकदानम् इति ॥ (६३९.१)

===========

अस्ति दाक्षिणात्ये जनपदे मिहिलारोप्यं नाम नगरम् ॥ (१.१)
तस्य नातिदूरे परिव्राजकावसथः ॥ (२.१)
तत्र परिव्राड् जूटकर्णो नाम प्रतिवसति स्म ॥ (३.१)
स भिक्षावेलायां तस्मान् नगरात् तीर्थभूत इति ब्राह्मणगृहेभ्यः सखण्डगुडदाडिमगर्भाणां स्निग्धद्रवपेशलानाम् अन्नविशेषाणां भिक्षाभाजनं परिपूर्णं कृत्वा तम् आवसथम् अवगम्य यथाविधि व्रतकालं कृत्वा तत्र शेषम् आपोतके सुगुप्तं कृत्वा नागदन्तके स्थापयति ॥ (४.१)
अहं सपरिजनस् तेन वर्ते ॥ (५.१)
एवं भक्ष्यमाणे तस्मिन् सुप्रयत्नस्थापितेऽपि निर्विण्णः स्थानात् स्थानम् उच्चैर् मत्प्रति भयात् संक्रमयति ॥ (६.१)
तद् अप्यहम् अनायासेन प्राप्नोमि भक्षयामि च ॥ (७.१)
अथैवं गच्छति काले कदाचित् तस्य परिव्राड् बृहत्स्फिङ्नाम प्राहुणक आगतः ॥ (८.१)
स जूटकर्णस् तस्य स्वागताद्युपचारं कृत्वा कृतयथोचितव्रतकालस् तस्मिन्न् आपोतके शेषं सुगुप्तं कृत्वा खट्वासीनः शयनगतं बृहत्स्फिजम् अपृच्छत् ॥ (९.१)
भवान् इतो मया वियुक्तः ॥ (१०.१)
तत आरभ्य केषु देशान्तरेषु तपोवनेषु वा परिभ्रान्त इति ॥ (११.१)
असावकथयत् ॥ (१२.१)
अथ कदाचिद् अहं महाकार्तिक्यां महातीर्थवरे पुष्करे स्नानं कृत्वा महतो जनसमूहदोषाद् भवता वियुक्तः ॥ (१३.१)
ततोऽहं गङ्गाद्वारप्रयागवाराणस्यादिष्वनुकूलप्रतिकूलं जाह्नवीम् अनु पर्यटन् किं बहुना कृत्स्नं महीमण्डलं समुद्रपर्यन्तम् अवलोकितवान् ॥ (१४.१)

अर्धाख्याते च तस्मिन्त् जूटकर्णः परिव्राण् नागदन्तोपश्लिष्टो मुहुर्मुहुर् जर्जरम् अवादयत् ॥ (१५.१)
कथ्यमानविघ्ने च क्रियमाणे कुपितो बृहत्स्फिग् आह ॥ (१६.१)
अहम् आदृतो भूत्वा भवतः कथयामि भवतस् तु किमर्थम् अनादरः ॥ (१७.१)
तथा च ॥ (१८.१)
विमानना दुश्चरितानुकीर्तनं कथाप्रसङ्गो वचनाद् अविस्मयः । (१९.१)
न दृष्टिदानं कृतपूर्वनाशनं विरक्तभावस्य नरस्य लक्षणम् ॥ (१९.२)
सोऽब्रवीत् ॥ (२०.१)
भद्र न मन्युः करणीयः ॥ (२१.१)
पश्य अयं मे मूषको महतोऽपकारान् करोति भिक्षाभाजनप्रध्वंसान् न चाहम् एनं शक्नोमि निवारयितुम् ॥ (२२.१)
सोऽब्रवीत् ॥ (२३.१)
किम् एष एककोऽत्र मूषकः उतान्येऽपि मूषकाः ॥ (२४.१)
सोऽब्रवीत् ॥ (२५.१)
किम् अन्यैर् मूषकैः ॥ (२६.१)
अयं मां दुष्टो योगीवाजस्रं छलयति ॥ (२७.१)
तच्छ्रुत्वासावाह ॥ (२८.१)
जूटकर्ण न मूषकमात्रस्येदृशी शक्तिर् भवति किं तर्हि कारणेनात्र भवितव्यम् ॥ (२९.१)
उक्तं च ॥ (३०.१)
नाकस्माच्छाण्डिली माता विक्रीणाति तिलैस् तिलान् । (३१.१)
लुञ्चितांल् लुञ्चितैर् अव कार्यम् अत्र भविष्यति ॥ (३१.२)
जूटकर्ण आह ॥ (३२.१)
कथं चैतत् ॥ (३३.१)
सोऽब्रवीत् ॥ (३४.१)
अस्ति अहं कदाचिद् अभ्यर्णासु वर्षासु कस्मिंश्चिद् अधिष्ठाने स्थितिग्रहणनिमित्तं कंचिद् ब्राह्मणम् आवासं प्रार्थितवान् ॥ (३५.१)
वर्षास्वतीतासु पुनर् विहारार्थं प्रहरशेषायां शर्वर्यां प्रतिबुद्धोऽचिन्तयम् ॥ (३६.१)
कतमेन दिग्भागेनावगन्तव्यम् ॥ (३७.१)
अथ युगपद् असावपि ब्राह्मणस् तस्यां वेलायां प्रतिबुद्धो जालकान्तरितां भार्याम् अपृच्छत् ॥ (३८.१)
ब्राह्मणि श्रूयताम् ॥ (३९.१)
श्वः पर्वकालो भविता ॥ (४०.१)
तत्र त्वया यथाशक्ति ब्राह्मणभोजनं कर्तव्यम् इति ॥ (४१.१)
असावाह बहुपरुषाक्षरया गिरा ॥ (४२.१)
कुतस् ते ब्राह्मणभोजनस्य शक्तिर् अत्यन्तदरिद्रस्येति ॥ (४३.१)
एवम् उक्तोऽसौ कूपे प्रक्षिप्त इव न वचः किंचिद् अवोचत् ॥ (४४.१)
पुनर् अपि चिराद् अब्रवीत् ॥ (४५.१)
ब्राह्मणि कर्तव्यः सञ्चयो नित्यं न तु कार्योऽतिसञ्चयः ॥ (४६.१)
अतिसञ्चयशीलोऽयं धनुषा जम्बुको हतः ॥ (४७.१)
असावब्रवीत् ॥ (४८.१)
कथं चैतत् ॥ (४९.१)
ब्राह्मणोऽब्रवीत् ॥ (५०.१)
अस्ति कस्मिंश्चिद् अधिष्ठाने मांसवृत्तिर् व्याधः ॥ (५१.१)
स प्रत्युषस्य् उत्थाय किंचिद् वनम् अनुप्रविश्य शीघ्रम् एव मृगं विद्ध्वा कृतमांससञ्चयः प्रत्यागच्छन् महति तीर्थावतारे अवतरन् महिषशावतुल्यम् उद्धृतविषाणं कर्दमपिण्डावलिप्तगात्रं सूकरम् अपश्यत् ॥ (५२.१)
तं दृष्ट्वाशुभनिमित्तप्रचोदितो भयम् आगतः ॥ (५३.१)
प्रतिनिवृत्य च प्रतिबद्धगतिः सूकरेण मांसं संकोचितकं भूमौ प्रक्षिप्य धनुः स शरं च कृत्वेदम् उवाच ॥ (५४.१)
न मे धनुर् नापि च बाणसंधनं किम् एष शङ्कां समुपैति सूकरः ॥ (५५.१)
प्रसह्य पश्याम्यहम् अस्य निश्चयं यमेन नूनं प्रहितो ममान्तिकम् ॥ (५६.१)
इत्य् उक्त्वा तस्मै विषदिग्धम् इषुं प्राहिणोज् जत्रुस्थाने विद्ध्वा परपार्श्वगतं च कृतवान् ॥ (५७.१)
सूकरेणापि प्रहारमूर्छितेनोत्तमं जवम् आस्थायावस्करप्रदेशे तथाभ्याहतः येन गतासुस् त्रिधागतशरीरो निपतितः ॥ (५८.१)
अथ तस्मिन् महति विषमे वृत्ते मृगलुब्धकसूकरप्रस्तरे क्षुत्क्षामकुक्षिर् दर्दुरको नाम गोमायुर् आहारार्थी तम् उद्देशम् आगतोऽपश्यन् मृगसूकरलुब्धकान् ॥ (५९.१)

तांश् च दृष्ट्वा परं परितोषम् उपागतः ॥ (६०.१)
आह च ॥ (६१.१)
नान्नपानानि सततम् उत्पद्यन्ते हि देहिनाम् । (६२.१)
लब्ध्वा प्रभूतम् अन्नाद्यं क्रमशस् तूपयोजयेत् ॥ (६२.२)
इति ॥ (६३.१)
एवम् उक्त्वा धनुःप्रतिबन्धं भक्षयितुम् आरब्धः ॥ (६४.१)
कथमपि दैवाच् छिन्ने प्रतिबन्धे वक्षःप्रदेशे भिन्नः पञ्चत्वम् उपगत इति ॥ (६५.१)
अतोऽहं ब्रवीमि ॥ (६६.१)
कर्तव्यः सञ्चयो नित्यम् इति ॥ (६७.१)
तत् ब्राह्मणि स्पाष्टयाज्जीव्यते ॥ (६८.१)
तच् च श्रुत्वा ब्राह्मण्याह ॥ (६९.१)
अस्ति मे तिलस्तोकं तण्डुलस्तोकं च ॥ (७०.१)
स त्वं प्रत्युषस्य् उत्थाय समित्कुशाद्यानयनार्थं वनं गच्छ ॥ (७१.१)
अहम् अपि सहानेन शिष्येण कामन्दकिना ब्राह्मणत्रयस्य साधयिष्यामि कृसरम् इति ॥ (७२.१)
तथा चानुष्ठिते तिलप्रस्थं कामन्दकिनाधिष्ठितं लुञ्चयेत्यास्थापितम् ॥ (७३.१)
तथा चातिव्यग्रत्वात् ते तिलाः कथमपि दैवाच् छुना विट्वालिताः तया चाभ्यन्तरस्थया दृष्टाः ॥ (७४.१)
ततोऽसावब्रवीत् ॥ (७५.१)
कामन्दके न शोभनम् आपतितम् ॥ (७६.१)
विघ्नम् उत्पन्नं ब्राह्मणतर्पणस्य ॥ (७७.१)
तथापि गच्छ इमांस् तिलांल्लुञ्चितान् अपि कृष्णतिलैः परावर्तयित्वा शीघ्रम् आगच्छ ॥ (७८.१)
कृष्णकृसरम् एव करिष्यामि ॥ (७९.१)
तथा चानुष्ठिते यस्मिन् वेश्मन्यहं भिक्षार्थम् उपागतः तस्मिन्न् एव कामन्दकिर् अपि तिलविक्रयार्थम् अनुप्रविष्टोऽकथयत् ॥ (८०.१)
गृह्यन्ताम् इमे तिलाः ॥ (८१.१)
ब्राह्मण्याभिहितः ॥ (८२.१)
कथं तिला दीयन्त इति ॥ (८३.१)
कामन्दकिर् आह ॥ (८४.१)
शुक्लान् कृष्णैः प्रयच्छामि यदीष्टं गृह्यताम् इति ॥ (८५.१)
तथेमे लुञ्चिता भद्रे लुञ्चितान् एव देहि मे ॥ (८६.१)
तथा च वृत्ते भर्तास्याः समागतः ॥ (८७.१)
तेनाभिहितम् ॥ (८८.१)
भद्रे किम् एतद् इति ॥ (८९.१)
सा तम् आह ॥ (९०.१)
समार्घास् तिला मया लब्धाः शुक्लाः कृष्णैः ॥ (९१.१)
ततोऽसौ विहस्याब्रवीत् ॥ (९२.१)
नाकस्माच्छाण्डिली माता विक्रीणाति तिलैस् तिलान् । (९३.१)
लुञ्चितांल्लुञ्चितैर् एव हेतुर् अत्र भविष्यति ॥ (९३.२)
इति ॥ (९४.१)
एवम् आख्यायाब्रवीत् परिव्राट् ॥ (९५.१)
अस्ति किंचित् खनित्रम् इति ॥ (९६.१)
जूटकर्ण आह ॥ (९७.१)
बाढम् अस्ति ॥ (९८.१)
उपनीते च तस्मिन् कक्ष्यां बद्ध्वा संदष्टौष्ठपुटः पृष्टवान् ॥ (९९.१)
कतरस् तस्य संचरणमार्ग इति ॥ (१००.१)
आख्याते च तस्मिन् खातकर्म कर्तुम् आरब्धः ॥ (१०१.१)
अहं चादाव् एव तयोर् आत्मगतम् आलापं श्रुत्वाहरम् उत्सृज्य कौतुकपरोऽवस्थित आसम् ॥ (१०२.१)
यदा त्वसौ दुर्गान्वेषणं कर्तुम् आरब्धः तदा मया ज्ञातम् ॥ (१०३.१)
उपलब्धम् अनेन दुरात्मना मदीयविवरद्वारम् इति ॥ (१०४.१)
मयापि केनापि साधुना पूर्वस्थापितं सुवर्णम् आप्तम् आसीत् ॥ (१०५.१)
तत् प्राधान्याच् चाहं शक्तिमन्तम् आत्मानं मन्ये ॥ (१०६.१)

असावपि दुष्टो विवरानुसारात् तद् उपलभ्य गृहीत्वा च धनं पुनर् आवस्थं प्राप्तो जूटकर्णम् अब्रवीत् ॥ (१०७.१)
इदं तस्य तद् ब्रह्महृदयम् यस्यासौ सामर्थ्याद् अशक्यम् अपि स्थानम् उत्पतति ॥ (१०८.१)
अधार्धं च विभज्य सुखासीनौ स्थितौ ॥ (१०९.१)
तं चाहम् आत्मनोऽवसादं प्राप्याचिन्तयम् ॥ (११०.१)
कदाचिद् इहस्थस्य मे प्रदीपम् उज्ज्वाल्यासंशयम् आसाद्य मां हन्युः ॥ (१११.१)
इति तस्मात् स्थानाद् अन्यद् दुर्गस्थानं कृतवान् ॥ (११२.१)
अन्ये च ये ममानुचराः त आगत्य माम् अब्रुवन् ॥ (११३.१)
भद्र हिरण्य त्वत्समीपवर्तिनो वयम् अत्यन्तक्षुधार्ताः ॥ (११४.१)
ग्रासमात्रम् अप्यस्माकं नास्ति ॥ (११५.१)
अस्तं गतेऽपि दिवसे न किंचिद् अस्माभिर् आसादितम् ॥ (११६.१)
तद् अर्हस्यद्यापि तावद् अस्मान् संतर्पयितुम् इति ॥ (११७.१)
तथा नामेत्य् उक्त्वाहम् आवसथं तैः समं गतः ॥ (११८.१)
एकान्तावस्थितश् च तयोर् दुरात्मनोः पूर्वाख्याते शेषम् आलापम् अशृणवम् ॥ (११९.१)
अथ जूटकर्णस् तथैवाख्याने वंशम् चालयति स्म ॥ (१२०.१)
तेनाभिहितः ॥ (१२१.१)
किम् अद्यापि निराकृते तस्मिन् मुहुर्मुहुश् चालयसि वंशम् ॥ (१२२.१)
स्थीयताम् ॥ (१२३.१)
अलम् इति यतोऽसावाह ॥ (१२४.१)
भद्र एष ममापकारी मूषकः पुनः पुनर् आयाति ॥ (१२५.१)
स विहस्याब्रवीत् ॥ (१२६.१)
मा भैषीः ॥ (१२७.१)
न किंचिद् अस्त्य् एतत् ॥ (१२८.१)
यतः ॥ (१२९.१)
भवत्यर्थेन बलवान् अर्थाद् भवति पण्डितः । (१३०.१)
पश्येमं मूषकं पापं स्वजातिसमतां गतम् ॥ (१३०.२)
अपि च ॥ (१३१.१)
यद् अस्योत्पतने शक्तिकारणम् तद् आवयोर् एव हस्तगतम् ॥ (१३२.१)
अहं तु तथैव समर्थितवान् ॥ (१३३.१)
सत्यम् आहायम् ॥ (१३४.१)
न ममाद्याङ्कुलकस्याप्य् उत्पतने शक्तिर् अस्तीति ॥ (१३५.१)
शृणोमि चानुचराणां परस्परालापम् ॥ (१३६.१)
आगच्छत गच्छामः ॥ (१३७.१)
नायम् अद्य तृणस्यापि कुब्जीकरणे समर्थः ॥ (१३८.१)
एवम् उक्त्वा पञ्चाशन्मात्रा गताः पुनर् अपि पञ्चविंशतिः दश पञ्च चेति अथान्ये द्वादशाष्टौ ॥ (१३९.१)
अथावशिष्टौ द्वौ ॥ (१४०.१)
तत्राप्य् एकोऽब्रवीत् ॥ (१४१.१)
अयम् आत्मनोऽप्य् उदरभरणे न समर्थः किं पुनर् अन्येषाम् ॥ (१४२.१)
इत्य् उक्त्वा निरपेक्षोऽसावपि प्रायात् ॥ (१४३.१)
ततोऽहं परिचिन्त्यैतवद् इति स्वम् आलयं गतः ॥ (१४४.१)
प्रभातसमये सर्व एव सपत्नसकाशं गताः दरिद्रोऽसाव् इति वदन्तः ॥ (१४५.१)
तथा प्रवृत्तानाम् अनुचराणाम् एकोऽपि न मत्सकाशम् आगच्छत् ॥ (१४६.१)
पश्यामि च मां दृष्ट्वा सम्मुखं त एव मत्सपत्नैः सह परस्परं किलकिलायन्तो हस्तास्फालनैर् ममानुचराः संक्रीडन्ति स्म ॥ (१४७.१)
चिन्तितं च मया यथा ॥ (१४८.१)
एवम् एतत् ॥ (१४९.१)
यस्यार्थास् तस्य मित्राणि यस्यार्थास् तस्य बान्धवाः । (१५०.१)
यस्यार्थाः स पुमांल् लोके यस्यार्थाः स च पण्डितः ॥ (१५०.२)
अपि च ॥ (१५१.१)
अर्थेन हि विहीनस्य पुरुषस्याल्पमेधसः । (१५२.१)
विच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ (१५२.२)

त्यजन्ति मित्राणि धनैर् विहीनं पुत्राश् च दाराश् च सुहृज्जनाश् च ॥ (१५३.१)
तम् अर्थवन्तं पुनर् आश्रयन्ते ॥ (१५४.१)
अर्थो हि लोके पुरुषस्य बन्धुः ॥ (१५५.१)
दरिद्रस्य मनुष्यस्य प्राज्ञस्य मधुरस्य च । (१५६.१)
कालेऽप्य् उक्तं वाक्यं न कश्चित् प्रतिपद्यते ॥ (१५६.२)
चण्डालश् च दरिद्रश् च द्वाव् एतौ सदृशौ मतौ । (१५७.१)
चण्डालस्य न गृह्णन्ति दरिद्रो न प्रयच्छति ॥ (१५७.२)
अर्थेन परिहीणं तु नरम् अस्पृश्यतां गतम् । (१५८.१)
त्यजन्ति बान्धवाः सर्वे मृतं सत्त्वम् इवासवः ॥ (१५८.२)
अर्थेन हीनः पुरुषस् त्यज्यते मित्रबान्धवैः । (१५९.१)
त्यक्तलोकक्रियादारः परासुर् इव निष्प्रभः ॥ (१५९.२)
शून्यम् अपुत्रस्य गृहं चिरशून्यं यस्य नास्ति सन्मित्रम् । (१६०.१)
मूर्खस्य दिशः शून्याः सर्वं शून्यं दरिद्रस्य ॥ (१६०.२)
उत्तिष्ठ क्षणम् एकम् उद्वह सखे दारिद्र्यभारं गुरुं क्लिष्टो यावद् अहं चिरं मरणजं सेवे त्वदीयं सुखम् ॥ (१६१.१)
इत्य् उक्तो धनवर्जितेन विदुषा गत्वा श्मशाने शवो दारिद्र्यान् मरणं वरं सुखकरं ज्ञात्वा स तूष्णीं स्थितः ॥ (१६२.१)
किम् अपरं भोः ॥ (१६३.१)
न कश्चिद् अन्यः प्रतिवचनम् अपि ददाति ॥ (१६४.१)
तानीन्द्रियाण्यविकलानि तद् एव नाम सा बुद्धिर् अप्रतिहता वचनं तद् एव । (१६५.१)
अर्थोष्मणा विरहितः पुरुषः स एव शेते हकार इव संकुचिताखिलाङ्गः ॥ (१६५.२)
तत् प्रायशो लोके स्वरूपम् ईदृशम् ॥ (१६६.१)
विनिपतितम् आर्यम् अपि जनं दृष्ट्वा धन्यन्धो मूकश् च भवति धनमदावलेपात् ॥ (१६७.१)
तथा च ॥ (१६८.१)
विलोचने चाविकले च वीक्षते स्फुटा च वाग् अस्ति न चापभाषणम् । (१६९.१)
अहो नृशंसैर् विभवैस् तथा कृतं यथेश्वरो याचनयन्त्रतां गतः ॥ (१६९.२)
तन् मादृशानां किं नाम तद् वरं स्यात् यस्य स्याद् ईदृशः फलविपाकः यत् सततं देहीति वक्ति ॥ (१७०.१)
तत् सर्वथा धनहीनस्य ममाधुना नेह श्रेयः ॥ (१७१.१)
उक्तं च ॥ (१७२.१)
वसेन् मानाधिकं स्थानं मानहीनं न संवसेत् । (१७३.१)
मानहीनं सुरैः सार्धं विमानम् अपि वर्जयेत् ॥ (१७३.२)
एवम् उक्त्वाप्यहं पुनर् अप्य् एवम् अचिन्तयम् ॥ (१७४.१)
किमर्थितां कस्यचित् करोमि ॥ (१७५.१)
तद् एतत् कष्टतरम् ॥ (१७६.१)
यत्कारणम् । (१७७.१)
कुब्जस्य कीटखातस्य दावनिष्कुषितत्वचः । (१७७.२)
तरोर् अप्य् ऊषरस्थस्य वरं जन्म न चार्थिनः ॥ (१७७.३)
कण्ठे गद्गदता स्वेदो मुखे वैवर्ण्यवेपथू । (१७८.१)
म्रियमाणस्य चिह्नानि यानि तान्य् एव याचतः ॥ (१७८.२)
तद् अर्थित्वम् अपि जघन्यम् ॥ (१७९.१)
वैराग्याहरणं धियोऽपहरणं मिथ्याविकल्पास्पदं पर्यायो मरणस्य दैन्यवसतिः शङ्कानिधानं परम् । (१८०.१)
मूर्तं लाघवम् आस्पदं च विपदां तेजोहरं मानिनाम् अर्थित्वं हि मनस्विनां न नरकात् पश्यामि वस्त्वन्तरम् ॥ (१८०.२)
अपि च ॥ (१८१.१)
निर्द्रव्यो ह्रियम् एति ह्रीपरिगतः प्रभ्रश्यते तेजसो निस्तेजाः परिभूयते परिभवान् निर्वेदम् आगच्छति । (१८२.१)
निर्विण्णः शुचम् एति शोकमनसो बुद्धिः परिभ्रश्यति निर्धीकः क्षयम् एत्यहो निधनता सर्वापदाम् आस्पदम् ॥ (१८२.२)
अपि च ॥ (१८३.१)
वरम् अहिमुखे क्रोधाविष्टे करौ विनिवेशितौ विषम् अपि वरं पीत्वा सुप्तं यमस्य निवेशने । (१८४.१)
गिरिवरतटाद् आत्मा मुक्तो वरं शतधा गतो न तु खलजनावाप्तैर् अर्थैः प्रियं कृतम् आत्मनः ॥ (१८४.२)
वरं विभवहीनेन प्राणैः संतर्पितोऽनलः नोपचारपरिभ्रष्टः कृपणोऽभ्यर्थितो जनः ॥ (१८५.१)
अथैवं गते केनोपायेन जीवितं स्यात् ॥ (१८६.१)
किं चौर्येण ॥ (१८७.१)

तद् अपि परस्वादानं कष्टतरम् ॥ (१८८.१)
यत्कारणम् । (१८९.१)
वरं युक्तं मौनं न च वचनम् उक्तं यद् अनृतं वरं मृत्युः श्लाघ्यो न च परकलत्राभिगमनम् । (१८९.२)
वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरतिर् वरं भिक्षार्थित्वं न च परधनास्वादम् असकृत् ॥ (१८९.३)
तद् अर्थित्वेऽपि हि पुरुषस्य ध्रुवोऽवमानः ॥ (१९०.१)
कथम् । (१९१.१)
आकारपरिवृत्तिस् तु बुद्धेः परिभवः पुनः । (१९१.२)
आशाहानिर् इवार्थित्वं परासुत्वम् इवापरम् ॥ (१९१.३)
अथ किं परपिण्डेनात्मानं यापयामि ॥ (१९२.१)
कष्टं भोः ॥ (१९३.१)
तद् अपि द्वितीयं मृत्युद्वारम् ॥ (१९४.१)
रोगी चिरप्रवासी परान्नभोजी परावसथशायी । (१९५.१)
यज् जीवति तन् मरणं सोऽस्य विश्रामः ॥ (१९५.२)
अपि च । (१९६.१)
जातः कुले महति मानधनावलिप्तः संमाननाभ्युदयकाल इव प्रहर्षी । (१९६.२)
तच् छेषपिण्डम् अपि नाम नृपस्य भुङ्क्ते यः सारमेय इव कष्टतरं किम् अन्यत् ॥ (१९६.३)
आशाविप्लुतचेतसोऽभिलषिताल् लाभाद् अलाभो वरस् तस्यालाभनिराकृता हि तनुताम् आपद्यते प्रार्थना । (१९७.१)
इष्टावाप्तिसमुद्भवस् तु सुतरां हर्षः प्रमाथी धृतेः सेतोर् भङ्ग इवाम्भसां विवशतां वेगेन विस्तार्यते ॥ (१९७.२)
अपि च । (१९८.१)
तिर्यक्पातितचक्षुषां स्मयवताम् उच्चैः कृतैकभ्रुवाम् आढ्यानाम् अवलेपतुङ्गशिरसां श्रुत्वा गिरो दारुणाः । (१९८.२)
किं सद्यस् स्फुटनं प्रयुक्तम् उरसः सेवाकृताम् अर्थिनाम् अन्तस् तद् यदि वर्जसारदृढया नालिप्यते तृष्णया ॥ (१९८.३)
दीना दीनमुखैर् यदि स्वशिशुकैर् आकृष्टचीराम्बरा क्रोशद्भिः क्षुधितैर् निरन्नपिठिरा दृश्यते नो गेहिनी । (१९९.१)
याच्ञाभङ्गभयेन गद्गदगलप्रोच्चारितार्धाक्षरं को देहीति वदेत् स्वदग्धजठरस्यार्थे मनस्वी पुमान् ॥ (१९९.२)
तन् निःस्वतेयम् अनेकप्रकारं मरणम् ॥ (२००.१)
अथ चेत् तद् एव धनम् आत्मीकरोमि ॥ (२०१.१)
मया तु तयोर् दुरात्मनोर् उपधानीकृता दृष्टपूर्वास् ते दीनाराः स्थगिताः ॥ (२०२.१)
एवं च सम्प्रधार्य गतोऽहं तम् उद्देशम् ॥ (२०३.१)
अथ तावन्यमनस्कौ मत्वा संजिघृक्षुर् अहम् उपश्लिष्टः ॥ (२०४.१)
दृष्ट्वा च मां बृहत्स्फिग् लगुडेनाताडयत् ॥ (२०५.१)
अहम् अपि मुमूर्षुः कथमपि निवृत्तः ॥ (२०६.१)
पुनर् अपि चिराद् बद्धाशः समाश्वस्य दीनारान्तिकम् उपश्लिष्टस् तेन निर्दयेनैवं शिरस्यभिहतः येनाद्यापि स्वप्नगतानाम् अपि तादृशानाम् उद्विजे ॥ (२०७.१)
पश्य चेमं तत्कालकृतं शिरसि मे व्रणम् ॥ (२०८.१)
साधु चेदम् उच्यते । (२०९.१)
सर्वप्राणविनाशसंशयकरीं प्राप्यापदं दुस्तरां प्रत्यासन्नभयो न वेत्ति विधुरं स्वं जीवितं काङ्क्षति । (२०९.२)
उत्तीर्णस् तु ततो धनार्थम् अपरां भूयो विशत्यापदं प्राणानां च धनस्य साधनधियाम् अन्योन्यहेतुः पणः ॥ (२०९.३)
सोऽहं बहु विचिन्त्यास्तां धनम् एतन् ममेति निवृत्तस् तृष्णातः ॥ (२१०.१)
सुष्ठु चेदम् उच्यते । (२११.१)
ज्ञानं चक्षुर् नेदं शीलं कुलपुत्रता न कुलजन्म । (२११.२)
सन्तोषश् च समृद्धिः पाण्डित्यम् अवार्यविनिवृत्तिः ॥ (२११.३)
सर्वाः सम्पत्तयस् तस्य संतुष्टं यस्य मानसम् । (२१२.१)
उपानद्गूढपादस्य सर्वा चर्मावृतैव भूः ॥ (२१२.२)
न योजनशतं दूरं वाह्यमानस्य तृष्णया । (२१३.१)
संतुष्टस्य करप्राप्तेऽप्यर्थे भवति नादरः ॥ (२१३.२)
सर्पाः पिबन्ति पवनं न च दुर्बलास् ते पर्णैस् तृणैर् वनगजा बलिनो भवन्ति । (२१४.१)
मूलैः फ्हलैर् मुनिवराः क्षपयन्ति कालं सन्तोष एव महतां परमा विभूतिः ॥ (२१४.२)
तत् सर्वथासाध्येऽर्थे परिच्छेद एव श्रेयान् ॥ (२१५.१)
दारिद्र्यस्य परा मूर्तिर् याच्ञा न द्रविणाल्पता । (२१६.१)
जरद्गवधनः शम्भुस् तथापि परमेश्वरः ॥ (२१६.२)

तथा च । (२१७.१)
को धर्मो भूतदया किं सौख्यम् अरोगता जन्तोः । (२१७.२)
कः स्नेहः सद्भावः किं पाण्डित्यं परिच्छेदः ॥ (२१७.३)
सन्ति शाकान्यरण्येषु नद्यश् च विमलोदकाः । (२१८.१)
चन्द्रः सामान्यदीपोऽयं विभवैः किं प्रयोजनम् ॥ (२१८.२)
इति ॥ (२१९.१)
एवम् अवधार्याहं स्वभवनम् आगतोऽपश्यं चित्रग्रीवं पाशबद्धम् ॥ (२२०.१)
इति च तं मोक्षयित्वानेन लघुपतनकेनाहं भवदन्तिकं प्रापितः ॥ (२२१.१)
अस्ति कस्मिंश्चिद् अधिष्ठाने सोमिलको नाम कौलिकः प्रतिवसति स्म ॥ (२२२.१)
स यद् उपार्जयति तत् तस्य दिवसव्ययाद् ऋतेऽधिकतां नोपयाति ॥ (२२३.१)
जातनिर्वेदः चासौ देशान्तरम् अगमत् ॥ (२२४.१)
तत्र महता क्लेशेन वर्षत्रयाभ्यन्तरे दीनारशतम् अर्जितम् स्वदेशं च प्रायात् ॥ (२२५.१)
अर्धपथे सन्ध्यासमये प्राप्ते न्यग्रोधपादम् अरण्यमध्ये समासादितवान् अचिन्तयच् च ॥ (२२६.१)
क्व साम्प्रतं गमिष्यामि विप्रकृष्टतरं ग्रामस्येति ॥ (२२७.१)
तद् अस्मिन्न् एव न्यग्रोधपादप आरूढो यामिनीं यापयामि ॥ (२२८.१)
इत्यवधार्य तथा कृतवान् ॥ (२२९.१)
अर्धरात्रे च कथंचित् स्वप्न इव पश्यति स्म द्वौ पुरुषौ महाप्रमाणौ दिव्याकृती क्रोधसंरक्तनयनौ तस्याभ्याशम् आयातौ ॥ (२३०.१)
तयोर् एकेनाभिहितम् ॥ (२३१.१)
भो वङ्कालक एवं भवान् ॥ (२३२.१)
बहुशस् त्वं मया निवारितपूर्वः यथास्य सोमिलकस्य पानभोजनाद् ऋतेऽपरं न किंचिद् दातव्यम् ॥ (२३३.१)
अस्याद्य दीनारशतं वर्तते ॥ (२३४.१)
शीघ्रम् अपहरस्वेति ॥ (२३५.१)
अथासावाह ॥ (२३६.१)
यथाज्ञापयसि देव ॥ (२३७.१)
एवं करोमि ॥ (२३८.१)
इत्याकर्ण्य प्रतिबुद्धोऽसौ यावत् दीनारशतं नापश्यत् विषण्णहृदयश् चाचिन्तयत् ॥ (२३९.१)
कष्टं भोः ॥ (२४०.१)
किम् एतत् ॥ (२४१.१)
कथम् इह केनापि भूतेन वञ्चितः ॥ (२४२.१)
तत् किम् अधुना गृहं गत्वा करिष्ये ॥ (२४३.१)
इतः प्रतिनिवृत्य पुनर् वित्तम् आसाद्य यावद् गच्छामि ॥ (२४४.१)
एवं चिन्तयन् प्रभातायां रात्र्यां भूयोऽपि नगरम् आसाद्य वित्तोपार्जनाय चित्तम् आस्थाय कतिपयकालेन पञ्चाशद्दीनारान् उपार्ज्य पुनः स्वदेशगमनाय तेनैव मार्गेण प्रवर्तितः ॥ (२४५.१)
दैवचोदितः सन् नाधिकं लभते नान्यमार्गगमनं वा ॥ (२४६.१)
तत्रैव नीयते यावद् अस्तं गच्छति भानौ तम् एव न्यग्रोधम् आसादितवान् अचिन्तयच् च ॥ (२४७.१)
कष्टं भोः ॥ (२४८.१)
किम् इदम् आरब्धं दैवहतकेन ॥ (२४९.१)
पुनः स एव न्यग्रोधरूपी राक्षस आपतित इति ॥ (२५०.१)
एवं चिन्तयन् स्वप्नायमानः पश्यति स्म द्वावेतौ पुरुषौ ॥ (२५१.१)
तयोर् एकोऽब्रवीत् ॥ (२५२.१)
भो वङ्काल सोमिलकस्य पञ्चाशद्दीनारा वर्तन्ते ॥ (२५३.१)
तन् न युक्तम् ॥ (२५४.१)
ततोऽसावाह ॥ (२५५.१)
हृतान् अवधारयस्वेति ॥ (२५६.१)
सोमिलकस् तु प्रतिबुद्धो नाद्राक्षीद्धृतान् इति ॥ (२५७.१)
अथ जातनिर्वेदोऽब्रवीत् ॥ (२५८.१)
किं मम जीवितेन प्रयोजनम् ॥ (२५९.१)
कोऽयं वृत्तान्तः केन वा कारणेन मम क्लेशार्जितवित्तम् अपहरतीति न विजानामि ॥ (२६०.१)
अथ प्राणांस् त्यक्ष्यामीति ॥ (२६१.१)

एवं चिन्तयन् निराहारस् तत्र एव तस्थौ यावत् कतिपयैर् एवाहोभिर् दिव्याकारं पुरुषं दृष्टवान् ॥ (२६२.१)
तेनोक्तः ॥ (२६३.१)
भोः सोमिलक धनदोऽस्मि ॥ (२६४.१)
नाभाव्यं कस्मैचित् प्रयच्छामि धनम् ॥ (२६५.१)
तथा च । (२६६.१)
यद् अभावि न तद् भावि भावि यत् तद् अनन्यथा । (२६६.२)
इति चिन्ताविषघ्नोऽयम् अगदः किं न पीयते ॥ (२६६.३)
शयान आकस्मिकम् अश्नुते प्हलं कृतप्रयत्नोऽप्यपरोऽवसीदति । (२६७.१)
असंयमान् नृत्यति केवलं जनो विधिस् तु यत्रेच्छति तत्र सम्पदः ॥ (२६७.२)
नैवाकृतिः प्हलति नैव गुणा न शौर्यं विद्या न चैव न च यत्नकृतो विशेषः । (२६८.१)
भाग्यानि कर्मप्हलसञ्चयसंचितानि काले प्हलन्ति पुरुषस्य यथैव वृक्षाः ॥ (२६८.२)
क्रुद्धोऽपि कः कस्य करोति दुःखं सुखं च कः कस्य करोति हृष्टः । (२६९.१)
स्वकर्मग्रन्थिग्रथितो हि लोकः कर्ता करोतीति वृथाभिमानः ॥ (२६९.२)
बुद्धिमन्तो महोत्साहाः प्राज्ञाः शूराः कुलोद्गताः । (२७०.१)
पाणिपादैर् उपेताश् च परेषां भृत्यतां गताः ॥ (२७०.२)
किम् अत्र परिदेवितेन सोमिलक ॥ (२७१.१)
पानभोजनाद् ऋते तव वित्तोपार्जनं न किंचिद् अस्ति ॥ (२७२.१)
वहन्ति शिबिकाम् अन्ये सन्त्यन्ये शिबिकां गताः । (२७३.१)
अकारणं हि वक्तृत्वं व्युत्थानं केवलं जरा ॥ (२७३.२)
न मन्त्रबलवीर्येण प्रज्ञया पौरुषेण वा । (२७४.१)
अवश्यं लभते जन्तुर् अत्र का परिदेवना ॥ (२७४.२)
लब्धव्यान्य् एव लभते गन्तव्यान्य् एव गच्छति । (२७५.१)
प्राप्तव्यान्य् एव चाप्नोति दुःखानि च सुखानि च ॥ (२७५.२)
अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम् । (२७६.१)
सुखान्यपि तथा मन्ये दैवम् अत्रातिरिच्यते ॥ (२७६.२)
तत् को विशेषयति केन कृतो विशिष्टः को वा धनैः सह विजायति को दरिद्रः । (२७७.१)
भाग्यानि षट्पद इव स्थिरचञ्चलानि नित्यं मनुष्यकुसुमेषु परिभ्रमन्ति ॥ (२७७.२)
तथापि दैवपुरुषयोगाद् अर्थोत्पत्तिः पुरुषश् चरति दैवं प्हलतीति ॥ (२७८.१)
अत्रोद्योगपरेणाहं भवता दृष्टः ॥ (२७९.१)
अमोघदर्शनोऽस्मि ॥ (२८०.१)
किं नु ते करवै ॥ (२८१.१)
असौ विज्ञापितवान् ॥ (२८२.१)
धनं मे देहीति ॥ (२८३.१)
धनदो विहस्याब्रवीत् ॥ (२८४.१)
मूढ किं न्वनेन क्रियते ॥ (२८५.१)
उपभोगोऽत्र कारणम् ॥ (२८६.१)
गच्छ अस्मिन्न् एवाधिष्ठाने द्वौ वणिजकौ पश्य ॥ (२८७.१)
एको धनी अपरो भोगवान् ॥ (२८८.१)
तौ दृष्ट्वा यादृक् तयोर् अभिवाञ्छसीति तादृग् भविष्यसि ॥ (२८९.१)
इत्य् उक्त्वान्तर्हितः ॥ (२९०.१)
सोमिलकोऽपि प्रभाते तन् नगरं उपविश्य सार्थवाहं धनगुप्तम् आससाद ॥ (२९१.१)
तत्रासौ निर्भत्स्यर्मानोऽपि कथमपि गृहे प्रविश्यालिन्दके निपत्यावस्थितः ॥ (२९२.१)
सोऽपि वणिक् सन्ध्याम् अतिवाह्य निशामुखे किंचिन्मात्रम् अशनम् अकरोत् ॥ (२९३.१)
सोमिलकेऽपि किंचिन्मात्रम् अशनम् अदापयत् ॥ (२९४.१)
अथासौ कौलिकः कुशान् आस्तीर्य भूमौ निपत्य सुप्तोऽपश्यत् ताव् एव द्वौ पुरुषौ ॥ (२९५.१)
तयोर् एकोऽब्रवीत् ॥ (२९६.१)
भो वङ्काल धनगुप्तेनाद्य कौलिकस्याशनं दापयता द्विगुणव्ययेनात्मा नियोजित इति ॥ (२९७.१)
सर्वस्य निपुणं गणयामि ॥ (२९८.१)
नास्य स्थापनाद् ऋते दाने भोजने वा किंचिद् विहितम् ॥ (२९९.१)

तद् अहं प्रातः समीकरोमीति ॥ (३००.१)
एवं श्रुत्वा प्रतिबुद्धः ॥ (३०१.१)
धनगुप्तोऽपि प्रातर् विषूचिकया महानत्ययं गतः ॥ (३०२.१)
स्वेदोष्णवारिपानादिना च परिक्लिश्योपोषितः ॥ (३०३.१)
ततस् स कौलिकः प्रभाते दैवचोदितोऽचिन्तयत् ॥ (३०४.१)
ईदृशेन धनेन किं कारणम् ॥ (३०५.१)
प्रकृतिर् दुस्त्यजेति ॥ (३०६.१)
ततो द्वितीयं तं व्ययशीलं भोगवर्माणम् उद्दिश्य सोमिलको गतः ॥ (३०७.१)
तेनासौ महता भोजनपानादिना सत्कृतः सोमिलकस् तथैव महति शयने सोपचारे स्वास्तीर्णे निशायां सुप्तोऽपश्यत् ताव् एव पुरुषौ ॥ (३०८.१)
तयोर् एकोऽब्रवीत् ॥ (३०९.१)
भद्र वङ्काल शोभनम् अनुष्ठितं भोगवर्मणा प्राहुणकं सोमिलकं संमानयता ॥ (३१०.१)
तद्भूयोऽपि प्रवर्धमानम् अर्थं व्ययोपभोगेऽस्य दातव्यम् ॥ (३११.१)
स चाह ॥ (३१२.१)
एवं क्रियते ॥ (३१३.१)
प्रतिबुद्धः सोमिलकोऽचिन्तयत् ॥ (३१४.१)
भोगा ईदृशो मे भवन्तु ॥ (३१५.१)
किं धनेन नाममात्रेण क्रियत इति ॥ (३१६.१)
तथा च समर्थितवान् ॥ (३१७.१)
अस्ति अहं कदाचिद् यमुनाकच्छे शालिग्राममध्ये प्रियकमृग्याम् उत्पन्नः ॥ (३१८.१)
वयं षड्जातयः ॥ (३१९.१)
तथा च ॥ (३२०.१)
चमूरः कदली कन्दली प्रियक एणक एते मृगयोनयः स्तुताः पञ्च एव ॥ (३२१.१)
मातृदुग्धप्रसादेन द्वे गती जानन्ति ॥ (३२२.१)
ऊर्ध्वा आञ्जसी चेति ॥ (३२३.१)
एते न लुब्धकैः प्राप्यन्ते ॥ (३२४.१)
प्रियकजातीयोऽहं मनुष्यप्रियश् चिरेणाक्षिणी निमीलयामि ॥ (३२५.१)
तथा सति मे माता यदा गता तदाहं लुब्धकैः पोतक एव गृहीतः ॥ (३२६.१)
स्त्रीक्षीरेण विवर्धितो यावत् तद्गृहे निवसामि तावन् मे माता स्वयूथ्यैश् चरति ॥ (३२७.१)
तयाभिहितम् ॥ (३२८.१)
अहो दैवम् ॥ (३२९.१)
अहम् अपुत्रवती क्व मे पुत्र इति ॥ (३३०.१)
एवं मयाकर्ण्यावधारितम् ॥ (३३१.१)
किं मे लुब्धकैः ॥ (३३२.१)
निजकृत्रिमयोः सहाययोर् निजः सहायो गरीयान् इति ॥ (३३३.१)
ततो लुब्धकगृहात् स्वैरं गत आसम् ॥ (३३४.१)
अथ लुब्धकसकाशाद् आगत इति भयचकितदृशं मातरं प्राप्तः ॥ (३३५.१)
तयाहम् आनन्दितः ॥ (३३६.१)
किम् एतद् आश्चर्यम् इति पृष्टः ॥ (३३७.१)
स्तन्यक्षीरेण विवर्धितः ॥ (३३८.१)
तेनातिमात्रम् अहं षण्मासजातशिशुः स्वयूथ्यम् अध्यागतः ॥ (३३९.१)
अभ्यधिकजवत्वाद् गच्छन् मृगान् आगतः प्रतिपालयामि ॥ (३४०.१)
अस्माकं द्वे गती ऊर्ध्वा आञ्जसी च ॥ (३४१.१)
तयोर् मातृकपयोविरहाद् अहम् आञ्जसीं वेद्मि नोर्ध्वम् ॥ (३४२.१)
अथ कदाचिन् मृगांश् चरमाणान् नानुपश्यामि ॥ (३४३.१)
आविग्नहृदयश् च क्व ते गता इति विलोकितवान् ॥ (३४४.१)
पश्यामि तान् ऊर्ध्वगत्यभिज्ञतया जालं विलङ्घ्याग्रतो गतान् ॥ (३४५.१)
अहं त्वनभिज्ञः स्त्रीक्षीरदोषात् ॥ (३४६.१)
तथा च । (३४७.१)
कार्यकाले तु सम्प्राप्ते नावज्ञेयं त्रयं सदा । (३४७.२)

बीजम् औषधम् आहारो यथा लाभस् तथाक्रयः ॥ (३४७.३)
अहं तेन क्षीराख्येनौषधेनोर्ध्वगत्यनभिज्ञतयाञ्जस्या गत्या निष्पतितो जालेनाकुलीकृतः ॥ (३४८.१)
ततश् च व्याधैर् दुरात्मभिर् जीवग्राहं गृहीत्वा क्रीडार्थं राजपुत्रायोपनीतः ॥ (३४९.१)
सोऽपि मां दृष्ट्वातीव परितुष्टो व्याधान् प्रादेशिकेन संमानितवान् ॥ (३५०.१)
मां चादरेणाङ्गोद्वर्तनस्नानभोजनधूपालङ्कारवासोविशेषैर् भोजनप्रकारैश् चासंभाव्यैः स्निग्धद्रवपेशलैः सखण्डगुडदाडिमचातुर्जातकविमिश्रैर् अन्यैश् च भोज्यैर् अतर्पयत् ॥ (३५१.१)
अथान्तःपुरिकाजनस्य राजकुमाराणां च हस्ताद्धस्तं च कौतुकपरतया ग्रीवानयनकरचरणकर्णावकर्षणैः परस्परेर्ष्याभी राजाङ्गनाभिः सम्मानपरम्परतया क्लेशितोऽहम् ॥ (३५२.१)
चिन्तितं च मया ॥ (३५३.१)
किं सुवर्णेन श्रोत्रबाधाकरेण ॥ (३५४.१)
हा कष्टम् ॥ (३५५.१)
कदा तद् वनं प्राप्स्यामीति ॥ (३५६.१)
निवृत्तकौतुकानां च कदाचिद् विविक्ते वर्तमाने राजपुत्रशयनाधस्तान् मया प्रावृट्समये मेघशब्दश्रवणोत्कण्ठितहृदयेन स्वयूथच्युतेन स्वयूथ्यान् अनुस्मृत्याभिहितम् ॥ (३५७.१)
वातवृष्ट्यवधूतस्य मृगयूथस्य धावतः । (३५८.१)
पृष्ठतो यद् गमिष्यामि कदा तन् मे भविष्यति ॥ (३५८.२)
एवम् उच्चारयतो राजपुत्रेण बालभावाद् अभावितचित्तेनैतावच्छ्रुत्वा संत्रस्तेन द्वाःस्थोऽभिहितः ॥ (३५९.१)
केनेदम् अभिहितम् इति ॥ (३६०.१)
संतापितहृदयः समन्ताद् अवलोकयन् माम् अपश्यत् ॥ (३६१.१)
अहं च लुब्धकैर् मानुषीं वाचं शिक्षित आसम् ॥ (३६२.१)
दृष्ट्वा च मां मानुषेणेवानेन मृगेनाभिहितम् विनष्टोऽस्मीति मत्वा परमावेगं गतः ॥ (३६३.१)
अथ कथंचिद् विस्खलितवाग् असौ बहिर् निश्चक्राम ॥ (३६४.१)
परमसत्त्वाधिष्ठित इव महद् अस्वास्थ्यम् आपेदे ॥ (३६५.१)
ततस् सर्वाभिषग्भूततन्त्रिकान् महत्या अर्थमात्रया ज्वरपरीतः प्रार्थितवान् एवं चाब्रवीत् ॥ (३६६.१)
यो ममैतां रुजम् अपनयति तस्याहम् अकृशां पूजां करिष्यामीति ॥ (३६७.१)
अहम् अपि तत्रासमीक्षितकारिणा जनेन लगुडेष्टकादिभिर् द्रुह्यमाणः केनापि साधुनावच्छन्नः ॥ (३६८.१)
किम् अनेन कृतम् इति ॥ (३६९.१)
अथ ममायुःशेषतया तेनार्येण सर्वलक्षणविदा विज्ञापितो राजपुत्रः ॥ (३७०.१)
अविमर्शपरेण लोकेनेमाम् अवस्थां प्रापितस्त्वम् ॥ (३७१.१)
पुनर् अपि तेनार्येणोक्तो यथा ॥ (३७२.१)
प्रियको नामैष मृगो मानुषीं वाचं जानाति ॥ (३७३.१)
नैष मानुषः ॥ (३७४.१)
भद्र अनेन प्रावृट्कालमेघशब्दप्रतिबोधितचित्तेन स्वयूथ्यानुस्मरणौत्सुक्याद् अभिहितम् ॥ (३७५.१)
वातवृष्ट्यवधूतस्येति ॥ (३७६.१)
किम् अत्र चित्रम् ॥ (३७७.१)
प्रायेण पक्षिणः पशवश् च भयाहारमैथुनमात्रवेदिनो भवन्ति इत्यधिगतम् एव देवेन ॥ (३७८.१)
अतोऽयम् अमानुषः ॥ (३७९.१)
तथा च । (३८०.१)
यादृशैः संनिवसते यादृशांश् चोपसेवते । (३८०.२)
यादृग् इच्छेच् च भवितुं तादृग् भवति पूरुषः ॥ (३८०.३)
हीयते हि नरस् तात हीनैः सह समागमात् । (३८१.१)
समैश् च समताम् एति विशिष्टैश् च विशिष्टताम् ॥ (३८१.२)
तत् देव मनुष्यसम्पर्कात् प्रियकजातिवशाच् च मानुषीं वाचं ददातीति संमानितः ॥ (३८२.१)
तथा च । (३८३.१)
यथोदयगिरेर् द्रव्यं सन्निकर्षेण दीप्यते ॥ (३८३.२)
इति ॥ (३८४.१)
तत्र किम् असम्बद्धं ज्वरकारणम् ॥ (३८५.१)
अपि च । (३८६.१)
मन्त्राणां परतो नास्ति बीजम् उच्चरणं तथा । (३८६.२)

असम्बद्धप्रलापा न कार्यं साधयितुं क्षमाः ॥ (३८६.३)
तथा च । (३८७.१)
शङ्खः कदल्यां कदली च भेर्यां तस्यां च भेर्यां सुमहद् विमानम् । (३८७.२)
तच्छङ्खभेरीकदलीविमानम् उन्मत्तशङ्काप्रतिमं बभूव ॥ (३८७.३)
तत् क्व शङ्खः क्व कदली क्व भेरी क्व विमानम् इति ॥ (३८८.१)
तद्विधम् इदम् असम्बद्धतया त्वय्यागतम् ॥ (३८९.१)
तच् च श्रुत्वापगतविकारो राजपुत्रः पूर्वप्रकृतिम् आपन्नः ॥ (३९०.१)
विचार्य तस्यार्यस्य प्रज्ञाविभवं ततो महतीं पूजां कृत्वा मन्त्रिसमीपवर्ती मन्त्रित्वे कृतः ॥ (३९१.१)
मां चापनीयाभ्यज्य प्रभूतेनाम्भसा प्रक्षालितशरीरं कृत्वारक्षिपुरुषाधिष्ठितं तत्रैव वने प्रतिमुक्तवान् ॥ (३९२.१)
तत् किं बहुना अनुभूतबन्धनोऽप्यहं नियतिवशात् पुनर् बद्ध इति ॥ (३९३.१)